को आदेश देकर कुछ शिष्ट (विश्वासपात्र) राजकुमारों से घिरे हुए महाराज (शूद्रक) ने (राजभवन के) भीतर प्रवेश किया। और समस्त आभूषणों को उतार कर (अतएव) विस्रस्त (ढली हुई) प्रभापुञ्ज वाले सूर्य के समान (तथा) चन्द्र-तारकों से शून्य आकाश विस्तार के समान एकत्रीकृत समुचित व्यायाम साधनों वाली व्यायाम भूमि में प्रविष्ट हुए।

**संस्कृत-व्याख्या—अथ**=अनन्तरं, **विसर्जितराजलोकः**=विसर्जिताः विसृष्टाः राजलोकाः नृपतयो येन सः राजा शूद्रकः, **स्वयमेव**=आत्मनैव, **तां**=पूर्वोक्तां, **चाण्डालकन्यकां**=मातङ्गकुमारीं,'**विश्राम्यतां**'=विश्रामं क्रियताम्, **इत्यभिधाय**=एतं कथयित्वा, **वैशम्पायनः**=एतदाख्यः शुकः, **अभ्यन्तरं**=राजभवनमध्ये, **प्रवेश्यतां**=नीयतामिति, **ताम्बूलकरङ्कवाहिनीं**=पर्णवीटिकाधारिणीं स्त्रियम्, **आदिश्य**=आज्ञाप्य, **कतिपयाप्तराजपुत्रपरिवृतः**=कतिपयैः कियद्भिः आप्तैः विश्वस्तैः राजपुत्रैः नृपसुतैः परिवृतः परिवेष्टितः, **नरपतिः**=भूपतिः शूद्रकः, **अभ्यन्तरं**=गृहमध्यं, **प्राविशत्**=प्रवेशमकरोत्। **अपनीताशेषाभरणश्च**=परित्यक्ताशेषभूषणश्च, **विगलितकिरणजालः**=विगलितानि विच्युतानि किरणजालानि रश्मिसमूहाः यस्य सः, **दिवसकरः**=सूर्यः, **इव चन्द्रतारकाशून्यः**=चन्द्रतारकाणां समूहेन शून्यः रहितः, **गगनाभोगः**=गगनस्य आकाशस्य आभोगः विस्तारः, इव, स राजा शूद्रकः, **समुपाहृतसमुचितव्यायामोपकरणाम्**=समुपाहृतानि एकत्रीकृतानि समुचितानि योग्यानि व्यायामे परिश्रमे उपकरणानि साधनानि यस्यां तथाविधां, **व्यायामभूमिं**=परिश्रमविधानयोग्यपृथ्वीम्, **अयासीत्**=अगच्छत्।

**टिप्पणी—अथ**=अनन्तर, 'अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकात्स्न्यारम्भसमुच्चये' इति मेदिनी। 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इति चामरः। **अभिधाय**=अभि√धा+क्त्वा—ल्यप्। **आदिश्य**=आ+दिश्+क्त्वा—ल्यप्। **आप्त**=आप्+क्त=विश्वास के योग्य। **परिवृतः**=परि√वृ+क्त। **समुपाहृत**=सम्+उप+आ√हृ+क्त=लाये गये। '**दिवसकर इव**' तथा '**गगनाभोग इव**' में उपमालंकार। दोनों

की नैरपेक्ष्य स्थिति होने से संसृष्टि है।

स तस्याञ्च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, श्रमवशादुन्मिषन्तीभिः कपोलयोरीषदवदलितसिन्धुवारकुसुममञ्जरी-विभ्रमाभिः, उरसि निर्दयश्रमच्छिन्नहारविगलितमुक्ताफलप्रकरानुकारिणीभिः, ललाटपट्टकेऽष्टमीचन्द्रशकलतलोल्लसदमृतबिन्दुविडम्बिनीभिः, स्वेदजलकणिकासन्ततिभिरलङ्क्रियमाणमूर्त्तिः इतस्ततः स्नानोपकरणसम्पादनसत्वरेण पुरःप्रधावता परिजनेन तत्कालं विरलजनेऽपि राजकुले समुत्सारणाधिकारमुचितमाचरद्भिः दण्डिभिरुपदिश्यमान-मार्गः, विततसितवितानाम्, अनेकचारणगणनिबध्यमानमण्डलाम्, गन्धोदकपूर्णकनकमयद्रोणीसनाथमध्याम्, उपस्थापितस्फाटिकस्नान-पीठाम्, एकान्तनिहितैरतिसुरभिगन्धसलिलपूर्णैः परिमलावकृष्टमधुकरकुलान्धकारितमुखैरातपभयान्नीलकर्पटावगुण्ठितमुखैरिव स्नानकलशैरुपशोभितां स्नानभूमिमगच्छत्।

**हिन्दी-अनुवाद**—उस (व्यायामस्थली) में समान अवस्था वाले राजकुमारों के साथ साधारण व्यायाम करके, (व्यायामोचित) परिश्रम करने के कारण आविर्भूत होती हुई (तथा राजा के) उभय कपोल भागों पर कुछ-कुछ मसली हुई सिन्दुवार पुष्प की वल्लरी (बौर या स्तबक) का भ्रम उत्पन्न करने वाली, वक्षःस्थल पर कठिन परिश्रम करने के कारण टूटे हुए हार से संस्खलित मोती के मनकों के समूह का अनुकरण करने वाली तथा ललाटपट्ट पर अष्टमीस्थ चन्द्रखण्ड के उत्तान भाग (ऊपर) पर दमकती हुई अमृतबिन्दुओं की सी छवि उत्पन्न करने वाली (श्रमजनित) पसीने की जलबिन्दु परम्पराओं द्वारा विभूषित किये जाते हुए शरीर वाला, इधर-उधर (जलादि) स्नानोपकरण जुटाने में जल्दबाजी करते हुए सामने दौड़धूप करने वाले सेवक द्वारा तथा उस (मध्याह्न) समय राजभवन में गिने-चुने लोगों के ही बीच रहने पर भी (लोगों

को) तितर-बितर करने के अधिकार का भलीभाँति पालन करने वाले दण्ड-धारियों (लठैतसेवकों) द्वारा निर्दिष्ट किये जाते हुए मार्ग वाला वह (राजा शूद्रक) तने हुए सफेद तम्बूवाली, असंख्य बन्दीजनों (भाटों) द्वारा बनाई गई परिधि वाली, सुरभित जल से परिपूर्ण सुवर्णमयी जलकुण्डिका (कण्डाल) से अलंकृत मध्यभाग वाली, विन्यस्त कर दी गई स्फटिकमणिनिर्मित स्नान की चौकी वाली, एकान्तप्रदेश में रखे गए—अत्यन्त सुगन्धित वास वाले जल से परिपूर्ण तथा सुगन्ध से आकृष्ट किये गए भ्रमर-समूह से अन्धकारित (अँधियारे) मुखों वाले अतएव मानो आतपभय से काले कपड़े से ढँके हुए मुखों वाले स्नानोपयोगी कलशों से सुशोभित स्नानभूमि में पहुँचे ।

**संस्कृत-व्याख्या**—**सः**=राजा शूद्रकः, **च तस्यां**=व्यायामशालायां, **समानवयोभिः**=तुल्यावस्थैः **राजपुत्रैः**=राजकुमारैः, **सह**=साकं, **कृतमधुरव्यायामः**=कृतः विहितः मधुरः स्वल्पायासजनकव्यायामः परिश्रमः येन सः, **श्रमवशात्**=परिश्रमवशात् **कपोलयोः**=गण्डयोः, **उन्मिषन्तीभिः**=स्फुरन्तीभिः, **ईषदवदलितसिन्धुवारकुसुममञ्जरीविभ्रमाभिः**=ईषत् किञ्चित् अवदलितं मर्दितं यत् सिन्धुवारस्य निर्गुण्ड्याः कुसुमं पुष्पं तस्य मञ्जरी वल्लरी तस्याः इव विभ्रमः विलासः यासां ताभिः, **उरसि**=वक्षःस्थले, **निर्दयश्रमच्छिन्नहारविगलित-मुक्ताफलप्रकरानुकारिणीभिः**=निर्दयश्रमेण क्लिष्टपरिश्रमेण छिन्नः छेदमुपगतः यः हारः मुक्तामाला तस्माद् विगलितानां विच्युतानां मुक्ताफलानां मौक्तिकानां प्रकरं समुदायमनुकर्तुं शीलं यासां ताभिः **ललाटपटके**=भालप्रान्ते, **अष्टमीचन्द्रशकलतलोल्लसदमृतबिन्दुविडम्बिनीभिः**=अष्टमीचन्द्रः अष्टमीतिथिसमुदितः सुधांशुरेव शकलं खण्डं तस्य तले उल्लसन्तः द्योतमानाः ये अमृतबिन्दवः पीयूषकणाः तान् विडम्बयितुमनुकर्तुं शीलं यासां ताभिः, **स्वेदजलकणिकासंततिभिः**=स्वेदजलबिन्दुश्रेणिभिः, **अलंक्रियमाणमूर्तिः**=सुशोभितशरीरः, **इतस्ततः**=समन्तात्, **स्नानोपकरणसम्पादनसत्वरेण**=स्नानम् आप्लवस्तस्य उपकरणानां साधनानां सम्पादने निष्पादने सत्वरेण त्वरायुतेन अतएव **पुरःप्रधावता**=अग्रतः शीघ्रं व्रजता, **परिजनेन**=सेवकजनेन, **तत्कालं**=तस्मिन् समये, **विरलजनेऽपि**=स्वल्पलोकेऽपि, **राजकुले**=राजगृहे, **उचितं**=योग्यं, **समुत्सार-**

**णाधिकारं**=जनसम्मर्दनिवारणाधिकारम्, **आचरद्भिः**=पालनं, कुर्वद्भिः, **दण्डिभिः**=यष्टिधारिपुरुषैः, **उपदिश्यमानमार्गः**=उपदिश्यमानः प्रदर्श्यमानः मार्गः अध्वा यस्य स तादृशः, **विततसितवितानां**=वितत ऊर्ध्व विस्तीर्ण सितं शुभ्रं वितानम् उल्लोचः यस्यां ताम्, **अनेकचारणगणनिबध्यमानमंडलाम्**=अनेके ये चारणाः स्तुतिपाठकाः तैः निबध्यमानं निर्मीयमाणं मण्डलं यस्यां तां तादृशीम्, **गन्धोदकपूर्णकनकमयद्रोणीसनाथमध्याम्**=गन्धोदकैः सुरभिसलिलैः पूर्णा भृता या कनकमयी सुवर्णरचिता द्रोणी जलकुण्डिका तया सनाथः युक्तः मध्यः मध्यभागः यस्याः ताम्, **उपस्थापितस्फाटिकस्नानपीठां**=उपस्थापितं विन्यस्तं स्फाटिकं स्फटिकमणिविरचितं स्नानपीठं आप्लवनचतुष्किका यस्यां सा तां तादृशीम्, **एकान्तनिहितैः**=एकान्ते एकस्मिन् भागे निहितैः स्थापितैः, **अतिसुरभिगन्धसलिलपूर्णैः**=अति अतिशयेन सुरभिः घ्राणतर्पणः येषा तादृशः सलिलैः जलैः पूर्णाः भृतास्तैस्तथोक्तैः, अतएव **परिमलावकृष्टमधुकरकुलान्धकारितमुखैः**=परिमलेन सुगन्धेन अवकृष्टाः आकृष्टाः ये मधुकराः मधुपाः तेषां कुलानि समूहा तैः अन्धकारितानि अन्धकारीकृतानि मुखानि वदनानि येषां तैः अतएव **आतपभयात्**=घर्मत्रासात्, **नीलकर्पटावगुण्ठितमुखैरिव**=नीलकर्पटैः श्यामवर्णवस्त्रखण्डैः अवगुण्ठितानि आच्छादितानि मुखानि आननानि येषां तैः तथोक्तैरिव, **स्नानकलशैः**=आप्लवकुम्भैः, **उपशोभितां**=विराजितां, **स्नानभूमिं**=आप्लवस्थानम्, **अगच्छत्**=अयासीत् ।

**टिप्पणी**—**'राजपुत्रैः सह' 'सहयुक्तेऽप्रधाने'** से सह के योग में तृतीया । **'कपोलयोः..........विभ्रमाभिः'**—व्यायाम करने के कारण राजा के कपोलों पर पसीने की बूदें झलक आयी थीं जो कि चमकती हुई ऐसी प्रतीत हो रही थीं कि मानो सिन्धुवार के श्वेतवर्ण पुष्पों की अधखिली कलियाँ हों । यहाँ लुप्तोपमालङ्कार है । **प्रकर**—समुदाय । **शकल**—खण्ड । **'मुक्ताफलप्रकरानुकारिणीभिः'** तथा **'अमृतबिन्दुविडम्बिनीभिः'** में **आर्थी उपमा है । उल्लसन्ती**=उत्+लस्+शतृ+ङीप् । **विडम्बिनी**—तिरस्कृत कर देने वाली अथवा अनुकरण करने वाली । **सन्ततिः**—

परम्परा, लड़ी । **उपदिश्यमान**–उप √ दिश् + यक् + शानच्–निर्देश किया जाता हुआ । **जलद्रोणी**–पानी से भरी हुई कुण्डिका । **कर्पट**–कपड़ा । **अवगुण्ठित**–ढके हुए । **नीलकर्पटावगुण्ठितमुखैरिव में भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा है । अगच्छत्**–गम् धातु, लङ् प्र० पु० ए० व० ।

अवतीर्णस्य च जलद्रोणीं वारविलासिनीकरमृदितसुगन्धामलकालिप्तशिरसो राज्ञः समन्तात् समुत्तस्थुरंशुकनिबद्धस्तनपरिकराः, दूरसमुत्सारितवलयबाहुलताः, समुत्क्षिप्तकर्णाभरणाः, कर्णोत्सङ्गोत्सारितालकाः, गृहीतजलकलसाः, स्नानार्थमभिषेकदेवता इव वारयोषितः । ताभिश्च समुन्नतकुचकुम्भमण्डलाभिर्वारिमध्यप्रविष्टः कारिणीभिरिव वनकरी परिवृतस्तत्क्षणं रराज राजा ।

**हिन्दी-अनुवाद**–जलद्रोणी (नहाने के हौज) में उतरे हुए, वाराङ्गनाओं के हाथों से उपमर्दित (पीसे गए) सुगन्धित आँवले से उपलिप्त शिर वाले महाराज (शूद्रक) के चारों ओर वस्त्र से कस कर बाँधे गए (संयत किये गए) स्तनमण्डल वाली, दूर हटा दिये गए अर्थात् ऊपर चढ़ा दिए गए कंगनों से युक्त बाहुलता वाली, कनफूलों को ऊपर उठाए हुई, कर्णपाली से घुँघराली लटों को दूर किये हुई तथा पानी से भरे घटों को लिये हुई वारवनिताएँ (गणिकाएँ) महाराज को स्नान कराने के लिए अभिषेक की अधिष्ठात्री देवियों की भाँति उपस्थित हुईं ।

समुन्नत पयोधर रूपी कुम्भमण्डलों वाली उन (वाराङ्गनाओं) से परिवेष्टित तथा जल के भीतर प्रविष्ट नरेश उस समय समुन्नत पयोधर सदृश कुम्भमण्डल-वाली हथिनियों से घिरे हुए तथा जल के भीतर प्रविष्ट राजा अरण्यचारी गजराज की भाँति सुशोभित हो उठे ।

**संस्कृत-व्याख्या**–**जलद्रोणीं**=जलकुण्डिकाम्, **अवतीर्णस्य**=तन्मध्ये प्रविष्टस्य, **वारविलासिनीकरमृदितसुगन्धामलकालिप्तशिरसः**=वारविलासिनीभिः

वेश्याभिः करैः हस्तैः मुदितेन मृष्टेन सुगन्धेन सुरभिणा आमलकेन धात्रीफलेन लिप्तं शिरः मस्तकं यस्य तस्य, **राज्ञः**=शूद्रकस्य, **समन्तात्**=परितः, **अंशुकनिबिडनिबद्धस्तनपरिकराः**=अंशुकैः वस्त्रैः निबिडं दृढं यथा स्यात्तथा निबद्धाः संयताः स्तनपरिकराः कुचाभोगाः याभिस्तास्तथोक्ताः, **दूरसमुत्सारितवलयबाहुलता**=दूरे ऊर्ध्वभागे समुत्सारितानि उत्तोलितानि वलयानि कङ्कणानि यासु ताः तथोक्ताः बाहुलताः भुजलताः यासां ताः तथोक्ताः, **समुत्क्षिप्तकर्णाभरणाः**=समुत्क्षिप्तानि नेत्रकपोलयोरुपरिपतननिवारणाय कर्णयोः उपरि विन्यस्तानि कर्णाभरणानि श्रवणाभूषणानि याभिस्ताः तथोक्ताः; **कर्णोत्सङ्गोत्सारितालकाः**=कर्णोत्सङ्गात् श्रवणान्तिकात् उत्सारिताः निवारिताः अलकाः चूर्णकुन्तला याभिस्ताः, **गृहीतजलकलसाः**=गृहीताः आत्ताः जलकलसाः सलिलपूर्णघटाः याभिस्ताः, **अभिषेकदेवताः**=स्नानाधिष्ठात्र्यः, **इव**, **स्नानार्थं**=राज्ञः स्नानविधिसम्पादनाय, **वारयोषितः**=गणिकाः समुत्तस्थुः । **समुन्नतकुचकुम्भमंडलाभिः**=समुन्नतं अत्यन्तोच्च कुचकुम्भमण्डलं स्तनकलससमूहः यासां ताभिः, **ताभिः**=वारयोषिद्भिः, **परिवृतः**=परिवेष्टितः, **वारिमध्यप्रविष्टः**=वारिमध्ये जलमध्ये प्रविष्टः कृतप्रवेशः, **राजा**=शूद्रकः, **करिणीभिः**=हस्तिनीभिः, परिवृतः, **वनकरी**=वन्यगजः, **इव** **रराज**=शुशुभे ।

**टिप्पणी—वारविलासिनी**—वेश्या । **समुत्तस्थुः**–सम्+उत्+स्था लिट् प्र० पु० ब० व० । **अंशुक**–रेशमीवस्त्र । **निबिड**—दृढ़तापूर्वक । **स्तनपरिकर**–स्तनों का विस्तार । **समुत्क्षिप्त**–सम्+उत्√क्षिप्+क्त—ऊपर फेंके हुए । **अलकाः**—बालों की लटें । **अभिषेकदेवताः**–अभिषेक–अभि+सिच्+घञ् । देवता—देव+तल् । **'अभिषेकदेवता इव वारयोषितः'** में **जात्युत्प्रेक्षा तथा स्वभावोक्ति का अङ्गाङ्गिभाव संकर है 'ताभिः······राजा'** यहाँ रूपक है । **परिवृतः**–परि√+वृ+क्त, घिरा हुआ । **रराज**–राज्+लिट् लकार प्र० पु० ए० व० । **'कारिणीभिरिव वनकरी'** में उपमालङ्कार है ।

द्रोणीसलिलादुत्थाय च स्नानपीठममलिस्फटिकधवलं वरुण इव राजहंसमारुरोह । ततस्ताः काश्चिन्मरकतकलसप्रभाश्यामायमाना नलिन्य इव मूर्तिमत्यः पत्रपुटैः, काश्चिद्रजतकलसहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण, काश्चित्कलसोत्क्षेपश्रम-स्वेदार्द्रशरीरा जलदेवता इव स्फाटिकैः कलसैस्तीर्थजलेन, काश्चिन्म-लयसरित इव चन्दनरसमिश्रेण सलिलेन, काश्चिदुत्क्षिप्तकलसपा-र्श्वविन्यस्तहस्तपल्लवाः प्रकीर्यमाणनखमयूखजालकाः प्रत्यङ्गुलिवि-वरविनिर्गतजलधाराः सलिलयन्त्रदेवता इव, काश्चिज्जाड्यमपनेतु-माक्षिप्तबालातपेनेव दिवसश्रिय इव कनककलसहस्ताः कुङ्कुमजलेन वाराङ्गनाः क्रमेण राजानमभिषिषिचुः ।

**हिन्दी-अनुवाद**—और द्रोणी (हौज) के जल से बाहर निकलकर मल-विहीन स्फटिक की भाँति शुभ्रवर्णा स्नान की चौकी पर (राजा) उसी प्रकार आरूढ़ हो गये जैसे निर्मल स्फटिक (बिल्लौर पत्थर) की भाँति शुभ्रवर्ण राजहंस पर वरुणदेव ।

इसके (स्नानपीठ) पर आरोहण के अनन्तर उन वाराङ्गनाओं ने एक-एक करके (बारी-बारी से) महाराज को अभिषिक्त किया । मरकतमणि से निर्मित घड़े की चमक से सँवराई हुई अतएव सशरीर पद्मिनियों-सी प्रतीत होने वाली कुछ (गणिकाओं) ने पत्रनिर्मित पुटों (दोनों) से, रूपहले कलशों से अलंकृत हाँथों वाली अतएव (चन्द्रिकाधवल) रातों के समान प्रतीत होने वाली कुछ (गणिकाओं) ने पूर्ण चन्द्रबिम्ब से विगलित कौमुदीधारा के समान जलधारा से, (जल से भरे) कलश उठाने के परिश्रम से समुत्पन्न पसीने से तर-बतर देहवाली अतएव जलदेवियों-सी प्रतीत होने वाली कुछ (गणिकाओं) ने स्फटिकमणिनिर्मित घड़ों द्वारा तीर्थजल के समान जल से, मलयपर्वत से समुद्-

भूत नदियों की भाँति प्रतीत होने वाली कुछ (गणिकाओं) ने चन्दनरस से सम्मिश्रित जल के समान जल से, ऊपर उठाये गये कलशों के पार्श्व (वाम-दक्षिण) भाग में पल्लवसदृश हाथों को रखे हुई–नखों से उत्पन्न प्रभाजाल को (इधर-उधर) बिखेरती हुई तथा प्रत्येक उँगली के विवर (अन्तराल या छिद्र) भाग से फूटती हुई जलधारा वाली कुछ (गणिकाओं) ने सलिल यंत्र देवता अर्थात् फौब्बारों की अधिष्ठात्री देवियों की भाँति, सुवर्णकलसों से युक्त हाथों वाली अतएव दिनलक्ष्मी सी प्रतीत होने वाली कुछ (गणिकाओं) ने शैत्याप-नोदनार्थ आकृष्ट किये गये बालातप अर्थात् नवोदित रवि के प्रकाश के समान कुङ्कुममिश्रित (पीले) जल से महाराज को अभिषिक्त किया ।

**संस्कृत-व्याख्या**—ततः स राजा, **द्रोणीसलिलात्**=कुण्डिकाजलात् **उत्थाय** =उत्थानं कृत्वा, च **अमलस्फटिकधवलं**=अमलः मलरहितः यः स्फटिकस्त-दाख्यो मणिविशेषः तद्वत् धवलं स्वच्छं, **स्नानपीठम्**=आप्लवनचतुष्किकां, **वरुणः** = प्रचेताः, **राजहंसमिव**=कलहंसमिव, **आरुरोह**=आरूढवान् । 'ततस्ताः... वाराङ्गना राजानमभिषिषिचुः' इत्यन्वयः । ततः=आरोहणानन्तरं, **काश्चित् ताः**=काश्चन वाराङ्गनाः, **मरकतकलशप्रभाश्यामायमाना**=मरकतकलस्य मणिनिर्मितघटस्य प्रभया दीप्त्या श्यामायमानाः अश्यामाः अपि श्यामवदाचरन्त्यः अत एव, **पत्रपुटैः**=पर्णसम्पुटैः, **मूर्तिमत्यः**=श्यामात्वसाम्यात्तत्स्वरूपधारिण्यः, **नलिन्यः**=पद्मिन्य इव राजानमभिषिषिचुरिति सर्वत्रान्वयः । **काश्चित्**= काश्चन, **रजतकलशहस्ताः**=रजतकलशः रूप्यनिर्मितघटः हस्ते पाणौ यासां ताः तथोक्ताः, **रजन्यः**=निशाः, **पूर्णचन्द्रमण्डलविनिर्गतेन**=पूर्णश्चासौ चन्द्रश्चे-ति पूर्णचन्द्र,पूर्णचन्द्रस्य मण्डलं तस्मात् समस्तशशिबिम्बात् विनिर्गतेन निःसृतेन, **ज्योत्स्नाप्रवाहेण**=चन्द्रिकारयेण इव,**काश्चित्**=काश्चन,**कलशोत्क्षेपश्रमस्वेदा-र्द्रशरीराः**=कलशस्य उत्क्षेपात् ऊर्ध्वमुत्थापनात् यः श्रमः आयासः तेन ये स्वेदाः धर्मसलिलानि तैरार्द्राणि स्विन्नानि शरीराणि वपूंषि यासां ताः,**स्फाटिककैः**=स्फ-टिकमणिनिर्मितैः,**कलशैः**=घटैः,**तीर्थजलेन**=पुण्यप्रदेशपयसा,अतएव **जलदेवताः** =जलाधिष्ठात्र्यः, इव **काश्चित्**=काश्चन वाराङ्गनाः, **मलयसरितः**=मलया-

नद्यः इव, **चन्दनरसमिश्रेण**=मलयजद्रवसंयुक्तेन, **सलिलेन**=जलेन, **काश्चित्**=अन्याः काश्चन, **उत्क्षिप्तकलशपार्श्वविन्यस्तहस्तपल्लवाः**=उत्क्षिप्ताः उत्तोल्य कक्षं नीताः ये कलशाः कुम्भाः तेषां पार्श्वेषु वामदक्षिणेषु विन्यस्ताः स्थापिताः हस्तपल्लवाः करकिसलयानि याभिस्ताः, **प्रकीर्यमाणनखमयूखजालकाः**=प्रकीर्यमाणानि विपर्यमाणानि विपर्यस्तानि नखानां पुनर्भवानां मयूखजालकानि किरणचयाः यासां ताः, **प्रत्यङ्गुलिविवरविनिर्गतजलधाराः**=प्रत्यङ्गुलि प्रतिहस्तशाखं यानि विवराणि अन्तरालप्रदेशाः तेभ्यो विनिर्गताः निःसृता जलधाराः सलिलसम्पाताः यासां ताः, अतएव **सलिलयन्त्रदेवताः**=जलयन्त्राधिष्ठातृदेवाः, **इव काश्चित्**=काश्चन अन्याः, **कनककलशहस्ताः**=कनककलशाः सुवर्णघटाः हस्तेषु पाणिषुयासां ताः, **वाराङ्गनाः**=वेश्याः, **दिवसश्रियइव**=दिनलक्ष्म्य इव, **जाड्यं**=जलीयशैत्यम् **अपनेतुं**,=अपकर्तुं **आक्षिप्त-बालातपेनेव**=आक्षिप्तः आकर्षितः बालातपः नवोदितसूर्यरश्मिः यस्मिन् तेन, इव कुङ्कुमजलेन=केसरमिश्रितसलिलेन, **क्रमेण राजानं**=भूपतिम् **अभिषिषिचुः**=स्नान कारयामासुः ।

**टिप्पणी—वरुण इव राजहंसम्** में उत्प्रेक्षालंकार है । **उत्थाय**–उत्+स्था+क्त्वा–ल्यप् । **आरुरोह**–आङ् √रुह्+लिट् प्र० पु० ए० व० । **श्यामायमानाः**–श्याम+क्यङ्+शानच्–जो श्याम नहीं थीं वे श्याम के समान आचरण करती थीं । यहाँ **क्यङ्गत उपमा है ।** ज्योत्स्ना–ज्योतिः अस्ति अस्यामिति, ज्योतिष् शब्द से 'ज्योत्स्ना-तमिस्रा'—इत्यादि सूत्र से उपधा का लोप और न प्रत्यय । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । **उत्क्षेप**–उत्+क्षिप्+घञ्–ऊपर उठाना । **स्फाटिकैः**—स्फटिकस्य इदं स्फटिक+अण् । **कलशोत्क्षेप·····तीर्थजलेन** में **जाति उत्प्रेक्षा अलंकार है । विन्यस्त**–वि+नि+अस्+क्त–रखा हुआ । **जाड्यं**–जड+ष्यञ्–ठिठुरन । **आक्षिप्त**–आ+क्षिप्+क्त–आकर्षित । **वाराङ्गना**–वेश्या "वारस्त्री गणिका वेश्या" इत्यमरः । **अभिषिषिचुः**–अभि+सिच्+लिट् प्र० पु० ब० व० । **कलशोत्क्षेप से अभिषिषिचुः** तक

जहाँ-जहाँ इव शब्द आया है वहाँ सर्वत्र जाति उत्प्रेक्षालङ्कार है ।

अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेकप्रहतपटुपटह-झल्लरीमृदङ्गवेणुवीणागीतनिनादानुगम्यमानो वन्दिवृन्दकोलाहला-कुलो भुवनविवरव्यापी स्नानशङ्खानामापूर्यमाणानामतिमुखरो ध्वनिः ।

**हिन्दी-अनुवाद**—इसके (अभिषेक) अनन्तर कर्णकुहरों को मानो विदीर्ण करती हुई, बजाए गए अगणित सामर्थ्यशाली नगाड़ों, झाँझों, मृदङ्गों, वंशियों, वीणाओं तथा गीतों की ध्वनि से प्रवर्तमान, वैतालिक समुदाय के कोलाहल मे सम्मिश्रित तथा भुवनों के अन्तराल (मध्यभाग) को प्राप्त कर लेने वाली (मुखवायु से भर कर) बजाए जाते हुए स्नानकालीन शंखों की अतिशय तारतर ऊँची ध्वनि उत्पन्न हुई ।

**संस्कृत-व्याख्या**—**अनन्तरं**=राज्ञः स्नानानन्तरम्, **अनेकप्रहतपटुपटह-झल्लरीमृदङ्गवेणुवीणानिनादानुगम्यमानः**=अनेकपुरुषैः प्रहताः वादिताः पटवः वाद्यविधाने समर्थाः पटहाः दुन्दुभयः झल्लर्यः वाद्य-विशेषाः मृदङ्गा मुरजा वेणवः वंश्यः वीणाः वल्लक्यः तासां गीतानां गानानाञ्च निनादैः ध्वनिभिः अनुगम्यमानः=अनुगमनं क्रियमाणः, **वन्दिवृन्दकोलाहलाकुलः**=वन्दिवृन्दस्य वैतालिकसमूहस्य, **कोलाहलेन**=कलकलेन, **आकुलः**=व्याप्तः, अतएव, **भुवनविवरव्यापी**=विष्टापान्तरालप्रसारी, **श्रुतिपथं**=कर्णकुहरं, **स्फोटयन्निव**=द्विधाकुर्वन्निव, **आपूर्यमाणानां**=वाद्यमानानां, **स्नानशङ्खानां**=स्नानकाल-वादनीयशङ्खानाम्, **अतिमुखरः**=अतिशयेन तारतरम्, **ध्वनि**=शब्दः, **उदपादि**=उत्पन्नोऽभूत् ।

**टिप्पणी**—"**अनन्तरं**..............**श्रुतिपथं स्फोटयन्निव आपूर्यमाणानां स्नानशङ्खानाम् अतिमुखरो ध्वनिः उदपादि**"—यह समस्त वाक्य का अन्वयांश

है । **स्फोटयन्**–स्फुट्+णिच्+शतृ । **प्रहत**–प्र√हन्+क्त–जोर से पीटे गये । झल्लरी–झाल । **अनुगम्यमान**–अनु+गम्+यक्+शानच् । **आपूर्यमाणानां**–आ+पूर्+यक्+शानच्; बजाते हुए । **उदपादि**–उत्+पद् लुङ् प्र० पु० ए० व० । 'अनन्तरम्·········ध्वनिः–यहाँ भुवनविवरव्यापन सम्बन्ध के न होने से भी उसके सम्बन्ध के कथन से **अतिशयोक्ति** अलङ्कार है तथा '**स्फोटयन्निव**' में **उत्प्रेक्षालङ्कार** है इन दोनों की निरपेक्ष स्थिति होने से **संसृष्टि** है ।

एवञ्च क्रमेण निर्वत्तिताभिषेको विषधरनिर्मोकपरिलघुनी धवले परिधाय धौते वाससी शरदम्बरैकदेश इव जलक्षालननिर्मलतनुः, अतिधवलजलधरच्छेदशुचिना दुकूलपटपल्लवेन, तुहिनगिरिरिव गगनसरित्स्रोतसा कृतशिरोवेष्टनः सम्पादितपितृजलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत् ।

**हिन्दी-अनुवाद**–इस प्रकार (पूर्वोक्त) क्रम से स्नानकृत्य सम्पन्न करके सर्पकञ्चुक के समान अत्यन्त सूक्ष्म (हल्के फुलके) तथा धवलवर्ण वाले, धुले हुए वस्त्रद्वय को धारण करके (महाराज शूद्रक) देवायतन में गये–जो (वृष्टि के अभाववश) जल से धुले हुए स्वच्छ प्रदेश वाले शरत्कालीन आकाश के एक खण्ड की भाँति स्नानजल से प्रक्षालित होने के कारण निर्मल शरीर वाला था, जो अतिशय धवल मेघखण्ड के समान निर्मल आकाशगङ्गा के जल-प्रवाह का पगिया (पगड़ी) बाँधे हुए तुहिनगिरि अर्थात् हिमाचल की भाँति अत्यन्त धवल मेघखण्ड के समान स्वच्छ रेशमी दुपट्टे से विरचित शिरोवेष्टन (पगड़ी) वाला था जो पितृतर्पण कार्य सम्पन्न कर चुके थे और जो मन्त्रों से पवित्रित जलाञ्जलि से भगवान् सूर्य को प्रणाम कर चुके थे ।

**संस्कृत-व्याख्या**–**एवञ्च क्रमेण**=पूर्वोक्तविधिना, **निर्वर्तिताभिषेकः**= निर्वर्त्तितः कृतः अभिषेकः स्नानं येन सः तादृशः स राजा शूद्रकः, **विषधर**=

**निर्मोक-परिलघुनी**=विषधरा: सर्पाः तेषां निर्मोक: कञ्चुक: तद्वत् परिलघुनी अत्यन्तसूक्ष्मे, **धवले**=स्वच्छे च, **धौतवाससी**=प्रक्षालितवसने, **परिधाय**= धारणं कृत्वा, **शरदम्बरैकदेशे**= शरदि वर्षात्यये अम्बरैकदेशे आकाशैकभागे इव, **जलक्षालननिर्मल:**=जलक्षालनेन अभिषेचनीयसलिलद्वारा प्रक्षालनेन च निर्मला मलरहिता तनु: शरीरं यस्य स तादृश: **अतिधवलजलधरच्छेदशुचिना**=अति-धवल: अतीव स्वच्छ: य: जलधरच्छेद: मेघखण्ड: तद्वत् शुचिना शुभ्रेण, **दुकूल-पटपल्लवेन**=दुकूलपटस्य क्षौमवसनस्य पल्लवेन विस्तरेण, **तुहिनगिरिरिव**= हिमाचलो यथा, **गगनसरित्स्रोतसा**=गगनसरित आकाशगङ्गातस्याः स्रोतसा प्रवाहेण इव, **कृतशिरोवेष्टन:**=कृत: विहित: शिरोवेष्टनम् उष्णीषो येन स तादृश:, **सम्पादितपितृजलक्रिय:**=सम्पादिता निष्पादिता पितृजलक्रिया पितृ-तर्पणादिर्येन स तादृश:, **मन्त्रपूतेन**=वेदमन्त्रपवित्रेण, **तोयाञ्जलिना**=सलि-लाञ्जलिना, **दिवसकरं**=सूर्यम्, **अभिप्रणम्य**=प्रणामं कृत्वा, **देवगृहं**=देव-मन्दिरम्, **अगमत्**=अगच्छत् ।

**टिप्पणी**—'**एवं च क्रमेण निर्वर्त्तिताभिषेक: (स राजा) देवगृहमगमत्**' यह मुख्य वाक्य है । विषधरनिर्मोक=साँप की केंचुली । **परिलघुनी**—अत्यन्त सूक्ष्म । **परिधाय**—परि √धा+क्त्वा–ल्यप् । धौतवाससी–यहाँ दो वस्त्र पहने जाने का विधान परिलक्षित हो रहा है । देवपूजा के लिए दो वस्त्रों को धारण करना आवश्यक है जैसा कि आह्निक—सूत्रावली में कहा गया है–"होम-देवार्च्चनाद्यासु क्रियासु पठने तथा । नैकवस्त्र: प्रवर्त्तेत यत्नतः सर्वथा बुधः ।।" **सम्पादितपितृजलक्रियः**—स्नान करने के उपरान्त पितृजलक्रिया का विधान है–'स्नात्वा सन्तर्पयेद् देवान् पितॄंश्च मानवांस्तथा' । '**मन्त्रपूतेन तोयाञ्ज-लिना दिवसकरमभिप्रणम्य**—मन्त्रों से अभिमन्त्रित सलिलाञ्जलि के द्वारा सूर्य को प्रणाम कर । अर्थात् प्रथम अर्घ्यदान तत्पश्चात् प्रणाम । कहा भी गया है–'अर्घ्यं दद्यात्तु प्रथमं भास्कराय महात्मने । ततो विष्णुं शिवं शान्तः, सूर्यं चैव प्रपूजयेत् ।।' '**विषधरनिर्मोक**' यहाँ **लुप्तोपमालंकार**, '**शरदम्बरैकदेश**

**इव' में पूर्णोपमालंकार**, **अतिधवलजलधर में लुप्तोपमा** तथा **तुहिनगिरिरिव में उपमालंकार है** ।

उपरचितपशुपतिपूजनश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यो विलेपनभूमौ झाङ्कारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमद-कर्पूरकुङ्कुमवाससुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदि-मालतीकुसुमशेखरः कृतवस्त्रपरिवर्त्तः रत्नकर्णपूरमात्राभरणः समुचितभोजनैः सह भूपतिभिराहारमभिमतरसास्वादजातप्रीतिरवनिपो निर्वर्त्तयामास ।

**हिन्दी-अनुवाद**—पशुपति (शकर) की समर्चनक्रिया सम्पन्न करके, देवालय से बाहर निकल कर, होमादिक अग्निकार्य से निवृत्त होकर, विलेपन-भूमि अर्थात् उबटन आदि तैयार किये जाने वाले स्थान मे—भनभनाते हुए भ्रमरसमुदाय द्वारा पीछा किये जाते हुए परिमल (महक) वाले कस्तूरी, कपूर तथा केसर की बास से सुगन्धित चन्दन द्वारा—उपलिप्त किये गये समस्त अङ्गों वाले, सुगन्धित मालतीपुष्पों का शिरोभूषण बना कर, (पूर्वगृहीत) वस्त्र का परिवर्तन करके, रत्नजटित कर्णाभरण मात्र आभरण वाले महाराज (शूद्रक ने) अपने साथ जेवनार में बैठने योग्य (अर्थात् उच्चस्तरीय) भूपतियों के साथ उत्कृष्ट रसों के आस्वादन से परितुष्ट होकर भोजन कार्य निष्पन्न किया ।

**संस्कृत-व्याख्या**—**उपरचितपशुपतिपूजनः**—उपरचितं निष्पादितं पशुपतेः शिवस्य पूजनमभ्यर्च्चनं येन सः, च **देवगृहात्**—सुरमन्दिरात्, **निष्क्रम्य**—बहिः-रागत्य, **निर्वर्त्तिताग्निकार्यः**—निर्वर्तितं निष्पादितम् अग्निकार्यम् अग्निहोमादि-र्येन सः, **विलेपनभूमौ**—अङ्गरागसम्पादनस्थाने, **झङ्कारिभिः**—झमिति शब्द कुर्वद्भिः, **अलिकदम्बकैः**—भ्रमरसमूहैः, **अनुबध्यमानपरिमलेन**—अनुबध्यमानः

सेव्यमानः परिमलः सौरभं यस्य स तेन, **मृगमदकर्पूरकुंकुमवाससुरभिणा**= मृगमदस्य कस्तूर्याः कर्पूरकुङ्कुमयोः हिमबालुककेसरयोश्च वासेन परिमलेन सुरभिणा घ्राणतर्पणेन, **चन्दनेन**=मलवजेन, **अनुलिप्तसर्वांगः**=लेपितसकल-शरीरावयवः, **विरचितामोदिमालतीकुसुमशेखरः**=विरचितः विनिर्मितः आमोदिभिः परिमलवद्भिः मालतीकुसुमैः जातीपुष्पैः शेखरः शिरोभूषणं येन स तादृशः, **कृतवस्त्रपरिवर्त्तः**=कृतः विहितः वस्त्रयोः पूर्वपरिहितवसनयोः परिवर्तः परिवर्त्तनं येन सः, **रत्नकर्णपूरमात्राभरणः**=रत्नकर्णपूरमात्रं रत्नखचितं कुण्डलमेव आभरणं तत्समयालङ्कारो यस्य सः, **अभिमतरसास्वादजातप्रीतिः**= अभिमता अभिलषिता ये रसाः मधुरादयस्तेषाम् आस्वादेन ग्रहणेन जाता उत्पन्ना प्रीतिः सन्तुष्टिः यस्य सः, **अवनिपः**=पृथ्वीपतिः राजा शूद्रकः, **समुचितभोजनैः**=समुचितं योग्यं भोजनम् एकपङ्क्तावशनं येषां तैः यथोक्तैः, **भूपतिभिः**=अन्यैः नृपैः, **सह**=साधं, **आहारं**=भोजनं, **निर्वर्त्तयामास**= सम्पादयामास ।

**टिप्पणी**—'अवनिप आहारं निर्वर्त्तयामास' यह वाक्य का मुख्यांश है । '**उपरचितपशुपतिपूजनश्च**'—पशुपति=शिव, 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः' इत्यमरः । शिवपूजन के विषय में कहा गया है–'असम्पूज्य शिवं मोहाद्ये नरा भुञ्जतेऽन्वहम् । सौख्यं नैवाप्नुवन्तीह भग्नाशाः पर्यटन्ति ते ।।" **निष्क्रम्य**—निस्√क्रम्+क्त्वा ल्यप् । **विलेपनभूमि**=प्रसाधन कक्ष । **अनुबध्यमान**—अनु+बध्+यक्+शानच् । **अलिकदम्बक**—भ्रमर समूह । परिमल—सुगन्ध । मृगमद—कस्तरी । प्रीति—प्री+क्तिन् ।

परिपीतधूमवर्त्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात्प्रमृष्टमणि-कुट्टिमप्रदेशादुत्थाय नातिदूरवर्तिन्या ससम्भ्रमप्रधावितया प्रतीहार्या प्रसारितं बाहुम् अवलम्ब्यानवरतवेत्रलताग्रहणप्रसङ्गादतिजरठकिस-लयानुकारिकरतलं करेण, अभ्यन्तरसञ्चारसमुचितेन परिजनेनानु-

गम्यमानः, धवलां शुकपरिगतपर्यन्ततया स्फटिकमणिमयभित्तिबद्ध-मिवोपलक्ष्यमाणम् अतिसुरभिमृगनाभिपरिगतेनामोदिना चन्दनवा-रिणा सिक्तशिशिरमणिभूमिम् अविरलविप्रकीर्णेन विमलमणिकुट्टि-मगगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितम्, उत्कीर्णशा-लभञ्जिकानिवहेन सन्निहितगृहदेवतेनेव गन्धसलिलक्षालितेन कल-धौतमयेन स्तम्भसञ्चयेन विराजमानम् अतिबहलागुरुधूपपरिमलम्, अखिलविगलितजलनिवहधवलजलशकलानुकारिणा कुसुमामोदवासि-तप्रच्छदपटेन, पट्टोपधानाध्यासितशिरोभागेन मणिमयप्रतिपादुका-प्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनगिरिशिलातलसदृशेन शयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत् ।

**हिन्दी-अनुवाद**—भोजन करके (मुखसौगन्ध्यप्रतिपादनार्थं) भली-भाँति धूमवर्तिका (सिगरेट) पीकर, आचमन कर तथा ताम्बूल लेकर–अच्छी तरह झाड़े-पोंछे गये उस मणिखचित फर्श से उठकर–कुछ दूर पर ही खड़ी हुई, घबरा कर दौड़ती आयी हुई प्रतीहारी द्वारा (आश्रय लेने के लिए) बढ़ाई गई तथा निरन्तर बेंत की छड़ी थामने के कारण (निरन्तर) अभ्यासवश अत्यन्त कठिन किसलय का अनुकरण करने वाली हथेली से युक्त भुजा का (अपने) हाथ से सहारा लेकर, अन्तःपुर में यातायात करने योग्य सेवकों द्वारा अनुगम्यमान (महाराज शूद्रक) 'स्थानमण्डप अर्थात् भोजन के बाद आराम करने योग्य गृहमण्डप में प्रविष्ट हुए–जो कि धवल रेशमी वस्त्रों से घिरे हुए किनारों वाला होने के कारण स्फटिकमणिमयी दीवारों से निर्मित हुआ-सा दृष्टिगोचर हो रहा था, जो अत्यन्त सुरभित कस्तूरी से सम्मिश्रित अतएव आमोद (सुगन्ध) युक्त चन्दनजल से सींची जाने के कारण शीतल मणिमयी भूमि वाला था, जो अम्बरतल के समान निष्कलङ्क मणिखचित फर्श

पर सघन रूप से फैले हुए तारकमण्डल की भाँति सघन रूप से फैले हुए पुष्प-समूह से प्रतिपल व्याप्त था, जो उत्कीर्ण की गई पुत्तलिकाओं के समूह वाले अतएव मानों समीपवर्तिनी गृहाधिष्ठात्री देवियों से युक्त–सुरभित जल से धोए गए सुवर्णनिर्मित स्तम्भसमूह से शोभायमान था, जो अत्यन्त प्रचुर कालागुरु एवं धूप की सुगन्धि से युक्त था और जो पूर्णरूप से निथरे हुए जलसमूह के कारण शुभ्र मेघखण्ड का अनुकरण करने वाली, पुष्पों की सुगन्धि से वासित चादरवाली, पट्टोपधान (रेशमी तकिये) से अलंकृत सिरहाने वाली, मणि-प्रचुर प्रतिपादुकाओं (अधःपीठों अथवा ठीहों) पर स्थापित किये गये पायों वाली, पार्श्ववर्ती रत्नखचित चरणासन (पीढ़े) वाली तथा हिमगिरि के शिलातल सदृश शय्या से सनाथ बनाई गई अर्थात् अलंकृत वेदिका वाला था।

**संस्कृत-व्याख्या**—(स राजा) भुक्त्वा उपस्पृश्य परिपीतधूमवर्तिः सभा-मण्डपमयासीत्। **उपस्पृश्य**=आचम्य च, **परिपीतधूमवर्तिः**=परिपीता मुखसुवासार्थं गृहीता धूमवर्तिः धूमशलाका येन सः, **गृहीतताम्बूलः**=गृहीतं मुखाभ्यन्तरे धृतं ताम्बूलं नागवल्लीदलं येन स तथोक्तः, **तस्मात्**=पूर्वोल्लिखितात्, **प्रमृष्टमणिकुट्टिमप्रदेशात्**=प्रमृष्टः संस्कृतः यः मणिकुट्टिमप्रदेशः रत्नमयबद्धस्थलं तस्मात्, **उत्थाय**=उत्थानं कृत्वा, **नातिदूरवर्त्तिन्या**=नातिदूरं वर्तते या सा तया, **ससम्भ्रमप्रधावितया**=ससम्भ्रमं सत्रासं प्रधावितया शीघ्रं व्रजन्त्या, **प्रतीहार्या**=द्वारपालिन्या **प्रसारितं**=विस्तारितम्, **अनवरत-वेत्रलताग्रहणप्रसङ्गात्**=अनवरतं निरन्तरं वेत्रस्य वेतसः या लता मृदुयष्टिः तस्याः ग्रहणं धारणं तस्य प्रसङ्गात् अभ्यासात्, **अतिजरठकिसलयानुकारिकर-तलं**=अतिजरठम् अतिकठिनं यत् किसलयं पल्लवं तदनुकर्तुं शीलं यस्य तत्तथोक्तं करतलं पाणितलं यस्य तत्तथोक्तम्, **बाहुं**=भुजं, **अवलम्ब्य**=आश्रित्य, **अभ्यन्तरसञ्चारसमुचितेन**=अभ्यन्तरे अभ्यन्तरभागे यः सञ्चारः सञ्चरणं तत्र समुचितेन योग्येन परिजनेन=सेवकलोकेन, **अनुगम्यमानः**=अनु-व्रज्यमानः, **धवलांशुकपरिगतपर्यंस्ततया**=धवलानि निर्मलानि यानि अंशुकानि

सूक्ष्मवस्त्राणि तः परिगताः परिवेष्टिताः पर्य्यन्ताः प्रान्तभागाः यस्य तस्य भावस्तत्ता तया, **स्फटिकमणिमयभित्तिबद्ध मिव**=स्फटिकमणिमयी या भित्तिः कुड्यं तया बद्धं रचितमिव, **उपलक्ष्यमाणं**=अवलोक्यमानम्, **अतिसुरभिमृगनाभिपरिगतेन**=अतिसुरभिणा अत्यन्तघ्राणतर्पणेन मृगनाभिपरिगतेन कस्तूरीपरिवेष्टितेन, **आमोदिना**=परमसुगन्धिना, **चन्दनवारिणा**=मलयजजलेन, **सिक्तशिशिरमणिभूमिम्**=सिक्ता अतएव शिशिरा शीतला मणिभूमिः रत्नबद्धाभूर्यत्र तं तथोक्तम्, **अविरलविप्रकीर्णेन**=अविरलं सान्द्रं यथा स्यात्तथा विप्रकीर्णेन प्रक्षिप्तेन, **विमलमणिकुट्टिमगगनतलतारागणेनेव**=विमलं निर्मलं मणि कुट्टिम्-रत्नबद्धभूमिः गगनतलतारागणेनेव=आकाशस्थितनक्षत्रमण्डलेनेव, **कुसुमोपहारेण**=पुष्पसमूहेन, **निरन्तरनिचितं**=निरन्तरम् अनवरतं निचितं व्याप्तम्, **उत्कीर्णशालभञ्जिकानिवहेन**=उत्कीर्ण उत्कीर्य विहितः शालभञ्जिकानिवहः पुत्तलिकापुञ्जः यस्मिन् तथोक्ते, अतएव **सन्निहितगृहदेवतेन**=सन्निहिताः सन्निकटाः गृहदेवता भवनाधिष्ठात्र्यो–देव्यो यस्मिन् तथोक्तेन इव, **गन्धसलिलक्षालितेन**=सुगन्धजलधौतेन, **कलधौतमयेन**=सुवर्णमयेन, **स्तम्भनिचयेन**=स्तम्भसमूहेन, **विराजमानम्**=शोभमानम्, **अतिबहलागुरुधूपपरिमलं**=अतिवहलः अत्यन्तप्रचुरो योऽगुरुः कृष्णागुरुः तस्य धूपस्य परिमलः सौरभं यस्मिंस्तत् तथोक्तम्, **अखिलविगलितजलनिवहधवलजलशकलानुकारिणा**=अखिलः समस्तः विगलितः निर्गतः जलनिवहः सलिलसमूहः–यस्मात् सः, अतएव धवलो यो जलधरो मेघस्तस्य शकलं खण्डमनुकर्तुं शीलं यस्य तेन, **कुसुमामोदवासितप्रच्छदपटेन**=कुसुमानां पुष्पाणाम् आमोदेन सौगन्ध्येन वासितः सुगन्धीकृतः प्रच्छदपटः आस्तरणवस्त्रं यस्य सः तेन, **पट्टोपधानाध्यासितशिरोभागेन**=पट्टस्य क्षौमवसनस्य यदुपधानम उच्छीर्षकं तेन अध्यासितः आश्रितः शिरोभागः यस्य तेन, **मणिमयप्रतिपादुकाप्रतिष्ठितपादेन**=मणिमयीषु रत्नचितासु प्रतिपादुकासु आधारपीठेषु प्रतिष्ठिताः स्थिताः पादाः पल्यङ्कपादाः यस्य स तेन, **पार्श्वस्थरत्नपादपीठेन**=पार्श्वस्थं निकटस्थं रत्नपादपीठं मणिपादासनं यस्य स तेन-**तुहिनगिरिशिलातलसदृशेन**=तुहिनगिरेः हिमालयपर्वतस्य यत् शिलातलं तत्सदृशेन, **शयनेन**=शय्यया, **सनाथीकृतवेदिकं**=सनाथीकृता अलंकृता वेदिका

यस्य तम्, **आस्थानमण्डपं**=सभाभवन (प्रति), **भुक्त्वा**=भोजनं कृत्वा, **अयासीत्**=अगच्छत् ।

**टिप्पणी**—इस वाक्य का मुख्यांश—**स राजा भुक्त्वा उपस्पृश्य आस्थानमण्डपमयासीत् । धूमवर्ति**—धूमशलाका । **उपस्पृश्य**—आचमन करके, उपस्पर्शस्त्वाचमनम्' इत्यमरः, भोजन के पश्चात् आचमन करना अत्यावश्यक है जैसा कि नारद ने कहा है—'सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वा—मृतं वचः । पीत्वाऽपोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि-सन् ॥' उप+स्पृश्+क्त्वा+ल्यप्=उपस्पृश्य । **धवलांशुक.........बद्धमिवोपलक्ष्यमाणम्**—में क्रियोत्प्रेक्षा अलङ्कार है । **मृगनाभि**—कस्तूरी । **परिमल**—गन्ध, 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः । **आमोदि**—सुगन्धित । **'अविरल.....निरन्तरनिचितम्'** में **उपमा** तथा **लुप्तोपमा** का **अङ्गाङ्गिभाव सङ्कर** है । **शालभञ्जिका**—पुतलियाँ । **'सन्निहितगृहदेवतेनेव'** में **क्रियोत्प्रेक्षालंकार** है । **कलधौत**—सुवर्ण । **प्रच्छदपटः**—पलङ्गपोश । **पट्टोपधान**—रेशमी कपड़े का बना हुआ तकिया । **शिरोभाग**—सिरहाना । **पादपीठम्**—पायदान । **शिशिरकरमणि**—चन्द्रकान्तमणि । "**धवलजलधरशकलानुकारिणा'** तथा **'तुहिनगिरिशिलातलसदृशेन'** में आर्थी उपमा है ।

तत्र च शयने निषण्णः क्षितितलोपविष्टया शनैः शनैरुत्संगनिहितासिलतया खंगवाहिन्या नवनलिनदलकोमलेन करसम्पुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन मुहूर्तमिवासाञ्चके । ततो नातिदूरवर्तिनीम् "अन्तःपुराद्वैशम्पायनमादायागच्छेति" समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रतीहारीमादिदेश । सा क्षितितलनिहितजानुकरतला'यथाज्ञापयति देवः' इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत् ।

**हिन्दी-अनुवाद**—वहाँ (अर्थात् स्थानमण्डप में) शय्या पर बैठे हुए, भूमितल पर बैठी हुई तथा गोदी में लता सदृश (लम्बी) तलवार लिये हुई, खड्गवाहिनी (दासी) द्वारा—नूतन कमलपत्र के समान कोमल करयुगल से

धीरे-धीरे दबाये जाते हुए चरणों वाले (महाराज शूद्रक) शयन काल में साक्षात्कार करने योग्य भूपतियों, मन्त्रियों तथा मित्रों के साथ प्रकरणानुकूल बातें करते हुए लगभग दो घड़ी तक (विश्राम करते) रहे।

इसके पश्चात् (चाण्डालकन्या द्वारा प्रदत्त) शुक की प्रवृत्ति (वृत्तान्त) पूछने में समुत्पन्न कुतूहल (उत्कण्ठा) वाले नरेश ने कुछ ही अन्तर पर खड़ी हुई प्रतीहारी को आदेश दिया—'अन्तःपुर से वैशम्पायन को लेकर आओ!'

उस (प्रतीहारी) ने पृथ्वीतल पर घुटनों एवं हथेलियों को टेक कर 'जैसी महाराज की आज्ञा' इस प्रकार आज्ञा को शिरोधार्य करके (महाराज के) आदेशानुकूल कार्य किया।

**संस्कृत-व्याख्या—तत्र**=तस्मिन् सभामण्डपे, **शयने**=आस्तरणे, **निषण्णः**=उपविष्टः राजा शूद्रकः, **क्षितितलोपविष्टया**=क्षितितले भूतले उपविष्टया निषण्णया तथा **उत्सङ्गनिहितासिलतया**=उत्सङ्गे क्रोडे निहिता संस्थापिता असिलता लतावत् लम्बमानः खड्गः यया सा तया, **खड्गवाहिन्या**=कृपाण-धारिण्या, **नवनलिनदलकोमलेन**=नव नवीनं यन्नलिनं कमलं तस्य दलानि पत्राणि तद्वत् कोमलेन मृदुलेन, **करसम्पुटेन**=हस्तयुगलेन, **शनैः शनैः**=मन्दं-मन्दं, **संवाह्यमानचरणः**=संवाह्यमानौ सञ्चाल्यमानौ चरणौ पादयुगलं यस्य सः, **तत्कालोचितदर्शनैः**=तत्काले विश्रामसमये उचितं योग्यं दर्शनं साक्षात्कारः येषां तैः, **अवनिपतिभिः**=भूपतिभिः, **अमात्यैः**=मंत्रिभिः, **मित्रैः**=सुहृद्भिश्च, **सह**=सार्धं, **तास्ताः**=तथाविधाः, **कथाः**=वार्ताः, **कुर्वन्**=विदधत्, **मुहूर्तं**=स्वल्पकालमिव, **आसाञ्चक्रे**=अवतस्थे। **ततः**=तदनन्तरं, **समुपजाततद्वृत्तान्तप्रश्नकुतूहलः**=समुपजातं समुत्पन्नं तस्य शुकस्य वृत्तान्तप्रश्ने प्रवृत्तिपृच्छायां कुतूहलं कौतुकं यस्य स तादृशः, राजा शूद्रकः, **नातिदूरवर्तिनीं**=न अतिदूरे समीप एव वर्तते या सा तां तादृशीं, **प्रतीहारीं**=द्वाररक्षिकाम्, **अन्तःपुरात्**=अवरोधात्, **वैशम्पायनं**=पूर्वोक्तं शुकम्, **आदाय**=गृहीत्वा, **आगच्छ**=आव्रज **इति**=इत्येवंरूपेण, **आदिदेश**=आज्ञापयामास, **सा**=प्रतीहारी, **क्षितितलनिहितजानुकरतला**=क्षितितले भूतले निहितौ स्थापितौ जानू ऊरुपर्वणी करतले पाणितले च यया सा तथोक्ता, **यथा**=येन प्रकारेण, **देवः**=स्वामी,

**आज्ञापयति** = आदिशति, **इति** = एवं कथयित्वा, **आज्ञां** = आदेशं, **शिरसि कृत्वा** = मस्तके निधाय, **यथादिष्टं** = यथादेशः, **तथा अकरोत्** = चकार ।

**टिप्पणी–निषण्णः**–नि + सद् + क्त–बैठा हुआ । **उत्सङ्ग**—गोद । **आसाञ्चक्रे**–आस् (उपवेशने) प्र० पु० ए० व०–बैठा । **"नवनलिनम्"** में **लुप्तोपमालङ्कार** है । **आदाय**–आ + दा + क्त्वा–ल्यप् । **आदिदेश**–आङ + दिश् + लिट् प्र० पु० ए० व० ।

अथ मुहूर्त्तादेव वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना किञ्चिदवनतपूर्वकायेन सितकञ्चुकाच्छन्नवपुषा जराधवलितमौलिना गद्‌गदस्वरेण मन्दमन्दसञ्चारिणा विहङ्गजाति प्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम ।

**हिन्दी-अनुवाद**–इसके बाद क्षण भर में ही वैशम्पायन (नामक शुक) महाराज के पास आ पहुंचा जो कि प्रतीहारी द्वारा थामे गये पिंजरे वाला था तथा जो सुनहरी वेत्रलताओं का (निवारणार्थ) आश्रय लेने वाले, कुछ झुके हुए शरीराग्रभाग वाले, धवल पंखों से समावृत शरीर वाले, बुढ़ौती के कारण धवलित शिर वाले, गद्‌गद (अव्यक्त) स्वर वाले तथा (अपनी) विहङ्गजाति के प्रति (स्वाभाविक) स्नेह होने के कारण पीछे-पीछे चलते हुए बूढ़े राजहंस की भाँति–स्वर्णजटित वेत्रयष्टि का आश्रय लेने वाले वृद्धावस्था के कारण पलित शिरोभाग वाले अस्फुट स्वर वाले, धीरे–धीरे चलने वाले तथा विहङ्गजाति के प्रति (स्वाभाविक) लगाव होने के कारण कञ्चुकी द्वारा अनुगमन किया जा रहा था ।

**संस्कृत-व्याख्या–अथ** = अन्तःपुरप्रवेशानन्तरं, **मुहूर्त्तादेव** = घटिकाद्वयमेव, **वैशम्पायनः** = शुकः, **प्रतीहार्या** = द्वारपालिकया, **गृहीतपञ्जरः** = गृहीतं धृतं पञ्जरं लौहशलाकानिर्मितपक्षिनिलयं यस्य स तथोक्तः, **कनकवेत्रलतावलम्बिना** = कनकेन सुवर्णेन खचिता या वेत्रलता वेतसयष्टिः तामवलम्बते धारणं करोतीत्येवं शीलो यः सः तेन तथोक्तेन, **किञ्चिदवनतपूर्वकायेन** = किञ्चिद् ईषद् अवनतः वार्धक्यवशान्नतः पूर्वकायः नाभेरूर्ध्वभागः यस्य तेन तादृशेन, **सितकञ्चुकाच्छन्नवपुषा** = सितकञ्चुकेन शुभ्रकूर्पासकेन आच्छन्नं आच्छादितं वपुर्देहो यस्य

सः तेन तादृशेन, **जराधवलितमौलिना** = जरया वार्द्धक्येन धवलितः स्वच्छकृतः मौलिः केशसमूहः यस्य तेन तादृशेन, **गद्गदस्वरेण** = गद्गदः अस्फुटः स्वरः कण्ठध्वनिर्यस्य सः तेन तादृशेन, **मन्दमन्दसञ्चारिणा** = मन्दं मन्दं शनैः शनैः सञ्चरितुं शीलं यस्य सः तेन तादृशेन, **विहङ्गजातिप्रीत्या** = पक्षिजातिप्रेम्णा, **जरत्कलहंसेनेव** = वृद्धराजहंसेनेव, **कञ्चुकिना** = सौविदल्लकेन, **अनुगम्यमानः** = अनुव्रज्यमानः **वैशम्पायनः** = पूर्वोक्तः शुकः, **राजान्तिकं** = नृपसमीपम्, **आजगाम** = आययौ ।

**टिप्पणी**—इस वाक्य का अन्वय इस प्रकार है—'**अथ वैशम्पायनः राजान्तिकमाजगाम** । **कञ्चुकी**—रनिवास में रहने वाला वृद्ध विद्वान् ब्राह्मण सेवक—'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ।' **अनुगम्यमान**—अनु + गम् + यक् + शानच् । '**राजान्तिकमाजगाम**' —यहाँ गत्यर्थक 'आङ् + गम्' धातु के योग में 'अन्तिकम्' में द्वितीय विभक्ति हुई । **आजगाम**—आङ् + गम् + लिट् प्र० पु० ए० व० । **जरत्कलहंसेनेव** में उपमालंकार है ।

क्षितितलनिहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्—'देव देव्यो विज्ञापयन्ति, देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्या नीतः' इत्यभिधायापगते च तस्मिन् राजा वैशम्पायनमपृच्छत्—"कच्चिदभिमतमास्वादितमभ्यन्तरे भवता किञ्चिदशनजातम् ?" इति ।

**हिन्दी-अनुवाद**—पृथ्वीतल पर हाथ टेक कर कञ्चुकी ने महाराज को निवेदित किया—**स्वामिन् !** महारानियां (मेरे मुँह से महाराज को) सूचित कर रही है कि महाराज के आदेशानुसार यह वैशम्पायन (शुक) स्नान तथा भोजन सम्पन्न करके प्रतीहारी द्वारा स्वामी के चरणों में प्रस्तुत किया गया है ।' ऐसा कह कर उस (वृद्ध कञ्चुकी) के चले जाने पर राजा ने वैशम्पायन से पूछा—क्या आपने अन्तःपुर मे कुछ रुचि के अनुकूल भक्ष्यपदार्थ आस्वादित कर लिया ?

**संस्कृत-व्याख्या—क्षितितलनिहितकरतलः** = क्षितितले धरणीतले निहित स्थापितं करतलं हस्ततलं येन सः तु, **कञ्चुकी** = अन्तःपुरनियुक्तः वृद्धः गुणान्वितो विप्रः, **राजानं** = नृपं शूद्रकं, **व्यज्ञापयत्** = न्यवेदयत्–**देव**! = हे स्वामिन्, **देव्यः** = महिष्यः, **विज्ञापयन्ति** = सूचयन्ति, यत् **देवादेशात्** = भवतो नियोगात्, एप **वैशम्पायनः** = शुकः, **स्नातः** = पूर्व कृतस्नानः पश्चात्, **कृताहारः** = विहितभोजनश्च, **देवपादमूलं** = देवस्य भवतः पादमूलं सन्निधि, **प्रतीहार्या** = द्वारपालिन्या, **नीतः** = प्रापितः, **इत्यभिधाय** = इत्युक्त्वा, **तस्मिन्** = कञ्चुकिनि, **गते** = सति, **राजा** = भूपतिः, **वैशम्पायनं** = शुकम्, **अपृच्छत्** = पृष्टवान्, **अभ्यन्तरे** = अन्तःपुरे, **भवता** = त्वया, **अभिमतं** = इष्टं, **किञ्चदशनजातं** = भोजनसामग्रीसमूहः, **आस्वादितं किञ्चित्** = भुक्तं न वेति ।

**टिप्पणी—व्यज्ञापयत्**—वि + ज्ञा + णिच् + लङ् प्र०पु०ए०व० + **अभिधाय**—अभि + धा + क्त्वा—ल्यप् । **अशनजातम्** = भोजन सामग्री का समूह । **कच्चित्** ···**अशनजातम्** ? यहाँ काकु है । लक्षण—'भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते' ।

स प्रत्युवाच—'देव ! किं वा नास्वादितम् ? आमत्तकोकिललोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः, हरिनखरभिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्वींषि खण्डितानि दाडिमबीजानि, नलिनीदलहरिन्ति द्राक्षाफलस्वादूनि च दलितानि स्वेच्छया प्राचीनामलकीफलानि । किं वा प्रलपितेन बहुना सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते' इति ।

**हिन्दी-अनुवाद**—उस (सुए) ने उत्तर दिया—महाराज ! भला क्या नहीं आस्वादित किया ? मदोन्मत्त कोकिल की नेत्रच्छवि के समान छवि वाले, लाल-नीले तथा तितमिट्ठे जामुनफलो के रस को मैंने जी भर कर पिया है, वनकेसरी के नखों से विदीर्ण किए गये मतवाले हाथियों के कुम्भस्थलों से पृथग्भूत रक्तसने मुक्ताफलों की प्रभा के समान प्रभाव वाले अनार के दानों

को मैंने खण्डित किया है, कमलिनी के पत्तों की भांति हरे रंगवाली तथा द्राक्षाफल (अगूर) के समान स्वादिष्ट पुरानी आमलकी (धराऊँ आँवला) के फलों को मैंने इच्छानुसार फोडा है। (महाराज !) अधिक बकवास करने से क्या लाभ ? महारानियों द्वारा स्वयमेव हाथों से मेरे पास तक लाया जाता हुआ सब कुछ ही अमृत जैसा लगता था।

**संस्कृत-व्याख्या-सः** = वैशम्पायनः, **प्रत्युवाच** = प्रतिवचनं ददौ, देव! = हे नाथ!, **वा** = अथवा, **किं** = कीदृशं भोजनं, **न आस्वादितं** = न भक्षितमिति काकुः ? अयम्भावो यद् मद्भक्ष्ययोग्यं सर्वमेव भक्षितम्। **आमत्तकोकिल-लोचनच्छविः** = आमत्तः मधुपानेनोन्मत्तः यः कोकिलः पिकः तस्य लोचनच्छविः नयनकान्तिः सैव छविर्यस्य स तादृशः, **नीलपाटलः** = नीलश्चासौ पाटलः श्वेतरक्तश्चेति नीलपाटलः,। **कषायमधुरः** = कषायोऽम्लश्चासौ मधुरो मिष्टर-मश्चेति कषायमधुरः, **जम्बूफलरसः** = जम्बूफलद्रवः, **प्रकामं** = पर्याप्तम्, **आपीतः** = पानविषयीकृतः, **हरिनखरभिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्र मुक्ताफलत्वींषि** = हरेः सिंहस्य नखरैः नखैः भिन्नाः विदारिताः—ये मत्तमातङ्गानाम् उन्मत्तगजानां कुम्भाः शिरःस्था मांसपिण्डा तेभ्यो मुक्तानि अपगता नियानि रक्तार्द्राणि शोणि-तस्विन्नानि मुक्ताफलानि मौक्तिकानि तेषां त्विष इव त्विषः कान्तयो येषां तानि तथोक्तानि, **दाडिमबीजानि** = दाडिमफलबीजानि, **खण्डितानि** = शकली-कृतानि, **नलिनीदलहरिन्ति** = नलिनी कमलिनी तस्याः दलानि पत्राणि तद्वत् हरिन्ति हरिद्वर्णानि, **द्राक्षाफलस्वादूनि** = द्राक्षाफलतुल्यस्वादिष्टानि च **प्राचीनामलकीफलानि** = क्षीरधात्रीसस्यानि, **स्वेच्छया** = स्वाधीनतया, **दलितानि** = चञ्चुपुटेन मर्दयित्वा खादितानि, **वा** = अथवा, **बहुना** = अधिकेन, **प्रलपि-तेन** = वृथा जल्पनेन, **किं** = को लाभः, **देवीभिः** = राज्ञः शूद्रकस्य महिषीभिः, **स्वयं** = आत्मना, **करतलोपनीयमानं** = निजैः हस्ततलैः दीयमानं, **सर्वमेव** = निखिलमपि भोज्यम्, **अमृतायते** = अमृतवदाचरति।

**टिप्पणी**—देव किं वा नास्वादितम् ?—यहाँ काकु है। **पाटलः** = गुलाबी सफेद, लालरंग, 'श्वेतरक्तस्तु पाटलः' इत्यमरः। **'कोकिललोचनच्छविः'** में

लुप्तोपमालङ्कार है । **हरनिखर**–सिंह के नाखून । **त्वींषि**—कान्तियाँ, । **हरिन्ति**–हरे । **प्राचीनामलकीफलानि**–पुराने आँवलों के फल । **अमृतायते**–अमृतवदाचरति –अमृत + क्यङ् अमृत के समान मधुर लगता है । 'नलिनीदलहरिन्ति' तथा 'द्राक्षाफलस्वादूनि' में लुप्तोपमालङ्कार है । दोनों की निरपेक्ष स्थिति से संसृष्टि है ।

एवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत्–"आस्तां तावत्सर्वमेवेदम्, अपनयतु नः कुतूहलम्, आवेदयतु भवनादितः प्रभृति कार्त्स्न्येनात्मनः जन्म कस्मिन्देशे ? भवान् कथं जातः ? केन वा नाम कृतम् ? का ते माता ? कस्ते पिता ? कथं वेदानामागमः ? कथं शास्त्राणां परिचयः ? कुतः कलाः समासादिताः ? किं जन्मान्तरानुस्मरणम् ? उत वरप्रदानम्, अथवा विहङ्गवेषधारी कश्चिच्छन्नो निवससि ? क्व पूर्वमुषितम् ? कियद्वा वयः ? कथं पञ्जरबन्धः ? कथं चाण्डालहस्तगमनम् ? इह वा कथमागमनम् ?" वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्त्तमिव ध्यात्वा सादरमब्रवीत्–देव ! महतीयं कथा । यदि कौतुकमाकर्ण्यताम्–

**हिन्दी अनुवाद**–इस प्रकार बतियाते हुए वैशम्पायन की बात को रोककर महाराज (शूद्रक) ने कहा–अच्छा, यह सब रहने दीजिए ! (पहले) हमारा कुतूहल (उत्कण्ठा) दूर कीजिए । प्रारम्भ से लेकर (अवतक) अपनी आप वीती अच्छी तरह प्रस्तुत कीजिये–किस जनपद में जन्म हुआ ? आप किस प्रकार पैदा हुये ? अथवा किसके द्वारा (आपका) नामकरण हुआ ? कौन आपकी माता हैं ? कौन आपके पिता हैं ? कैसे वेद की उपलब्धि हुई ? कैसे (न्यायमीमांसादि) शास्त्रों का परिचय (ज्ञान) हुआ ? कहाँ से (७५ भेद वाली) कलाओं का अभ्यास किया ? किस कारण (प्रभाव) से पूर्वजन्म का (आपको) अनुस्मरण है ? अथवा (यह) वरप्रदान है ? (जिसके प्रभाव

से आप अनुभूतार्थ को जान रहे हैं) अथवा कोई (अन्य विलक्षण जीव हैं आप जो कि) विहंगवेष धारण कर गुप्तरूप से रह रहे है ? पहले कहाँ रहे ? अथवा आपकी अवस्था कितनी है ? कैसे पिंजरे में फँस गये ? कैसे चाण्डाल के हाथ में आ पड़े ? अथवा यहाँ तक (राजदरबार में) कैसे आना हुआ ? अपने आप उत्पन्न हुई उत्कण्ठा वाले महाराज ( शूद्रक ) द्वारा आदर-पूर्वक पूछा गया वैशम्पायन भी पलभर के लिए ध्यानमग्न-सा होकर आदर सहित बोला—महाराज ! बड़ी लम्बी है यह कहानी । (फिर भी) यदि उत्कण्ठा है तो सुनिये—

**संस्कृत-व्याख्या—एवंवादिनः** = पूर्वोक्तप्रकारेण कथयतः, **तस्य** = वैशम्पायनस्य, **वचनं** = कथनम्, **आक्षिप्य** = अनादृत्य, **नरपतिः** = भूपतिः शूद्रकः, **अब्रवीत्** = अवदत्, **सर्वं** = निखिलं, **तावद्** = आदौ, **इदं** = पूर्वोक्तमेव, **आस्ताम्** = तिष्ठतु, **नः** = अस्माकं, **कुतूहलं** = कौतुकम्, **अपनयतु** = दूरीकरोतु । **भवानादितः प्रभृति** = उत्पत्तिकालादारम्य, **कात्स्न्येन** = समग्ररूपेण, **आत्मनः** = स्वकीयं (वृत्तान्तं), **आवेदयतु** = निवेदयतु । यथा हि भवतः, **कस्मिन् देशे** = कुत्र जनपदे, **जन्म** = उत्पत्तिः ? **कथं** = केन प्रकारेण भवान्, **जातः** = उत्पन्नः ? **केन वा नाम कृतं** = केन जनेन वा वैशम्पायनेति नाम विहितम् ? **ते का माता** = तव का जननी ? **ते कः पिता** = तव कः जनकः ? **कथं वेदानामागमः** = कथं वेदानामुपलब्धिः ? **कथं शास्त्राणां परिचयः** = कथं न्यायशास्त्रादीनां विशेषबोधः । **कला कुतः समासादिताः** = नृत्यगीतादिविद्याः कुतः प्राप्ताः ? **किं जन्मान्तरानुसरणं** = किन्निमित्तकं पूर्वजन्मोदन्तस्मृतिः ? **उत किं वरप्रदानं** = वरदानप्राप्तिः, **अथवा** = सिद्ध एव किंवा, **कश्चित्** = कश्चन, **विहङ्गवेषधारी** = स्वरूपधपक्षिारी, **छन्नः** = गुप्तः, **सन् निवससि** = वासं विदधासि ? **क्व पूर्वमुषितं** = कुत्र वा पूर्वमवस्थितम् ? **वा कियद्वयः** = अथवा वार्षिकावस्था का ? **कथं पञ्जरबन्धः** = केन प्रकारेण पञ्जरमध्येऽवस्थानम् ? **कथं चाण्डालहस्तगमनं** = अन्त्यजहस्तप्राप्तिः कथम् ? **इह वा कथमागमनं** = अस्मिन् प्रदेशे वा कथमुपस्थितिः ? **तु** = पुनः, **वैशम्पायनः** = शुकः, **सबहुमानं** = सादरम्, सादरम्, **उपजातकुतूहलेन** = समुत्पन्नकौतूहलेन, **स्वयं** = आत्मना, **अवनिपति**

**ना**=भूपतिना, **पृष्टः**=कृतप्रश्नः, **मुहूर्तमिव**=क्षणमिव, **ध्यात्वा**=चिन्तयित्वा, **सादरं**=सबहुमानम्, **अब्रवीत्**=उवाच, **देव**=हे नाथ ! **इयं**=एषा कथा, **महती**=अतिविस्तृता कथा । **यदि**=चेत्, **कौतुकं**=कौतूहलं तर्हि, **आकर्ण्यतां**=श्रूयताम्—

**टिप्पणी—कुतूहलं**—कौतुक, 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' **इत्यमरः** । **अपनयतु**—दूर करें—अप नी+लोट् प्र० पु० ए० व० । **उत**—क्या, 'आहो उताहो किमुत विकल्पे किं किमूत च' इत्यमरः । **कार्त्स्न्येन**—कृत्स्न+ष्यञ्=कार्त्स्न्यं । **छन्नः**—छद्+क्त, छिपा हुआ । **उषितम्**—वस्+क्त, निवास स्थान ।

'अस्ति पूर्वापरजलनिधिवेलावलग्ना, मध्यदेशालङ्कारभूता मेखलेव भुवः, वनकरिकुलमदजलसेकसंवर्धितैरतिविकचधवलकुसुमनिकरमत्युच्चतया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैरुपशोभिता, मदकलकुररकुलदश्यमानमरिचपल्लवा, करिकलभकरमृदिततमालकिसलयामोदिनी, मधुमदोपरक्तकेरलीकपोलकोमलच्छविना सञ्चरद्वनदेवताचरणालक्तकरसरञ्जितेनेव पल्लवचयेन संच्छादिता, शुककुलदलितदाडिमीफलद्रवार्द्रीकृततलैरतिचपलकपिकुलकम्पितकक्कोलच्युतपल्लवफलशबलैः अनवरतनिपतितकुसुमरेणुपांशुलैः पथिकजनरचितलवङ्गपल्लवसंस्तरैः अतिकठोरनारिकेलकेतकीकरीरबकुलपरिगतप्रान्तैः ताम्बूलीलतावनद्धपूगषण्डमण्डितैर्वनलक्ष्मीवासभवनैरिव विराजिता लतामण्डपैः, उन्मदमातङ्गकपोलस्थलगलितसलिलसिक्तेनेव निरन्तरमेलालतावनेन मदगन्धिनान्धकारिता, नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शबरसेनापतिभिरभिहन्यमानकेसरिशता ।

**हिन्दी-अनुवाद**—पूर्वी और पश्चिमी सागर-तट तक फैली हुई, मध्यप्रदेश की आभूषण स्वरूपा अतएव पृथ्वी की मेखला (करधनी) सी प्रतीत होने वाली, अरण्यचारी गजसमूहों के मदजल से सींचे जाने के कारण संवर्धित, शिखरभाग पर लगे हुए तथा अत्यन्त ऊँचाई के कारण नक्षत्रमण्डल से प्रतीत

होने वाले भरपूर खिले हुए श्वेतवर्णी पुष्प पुञ्ज को धारण करने वाले वृक्षों से शोभायमान, मदमस्त होने के कारण प्यारे लगने वाले कुरर पक्षियों के समुदाय द्वारा कुतरे जाते हुए मरिच वृक्ष के पत्रों वाली, हस्तिशावकों के शुण्डा-दण्डों से उपमर्दित तमालवृक्षों के नूतनपर्णों की गन्ध से संकुल मदिरा के आवेश (प्रभाव, मस्ती) से सुर्ख वने हुए केरली सुन्दरियों के कपोलों की कोमल छवि के समान छवि वाली तथा सञ्चरण करती हुई वनदेवियों के चरणों में लगे अलक्तकरस (महावर) से अनुरंजित ( रंगी हुई ) प्रतीत होने वाली नई कोपलों के समूह से आच्छादित, शुकसमूह द्वारा विदीर्ण किये गये दाडिम-फलों के रस से भिगोयी गई फर्श वाले अत्यन्त चञ्चल वानरसमूह द्वारा झिझोड़े गये कङ्कोल वृक्षों से घिरे हुए पल्लवों तथा फलों के कारण चितकबरे, निरन्तर गिरी हुई पुष्पधूलियों से पांशुल ( धूलभरी ), बटोहियों द्वारा बनाये गये लवङ्ग की पत्तियों के बिछौनों से युक्त-अत्यन्त कठोर नारियल, केवड़ा, करील तथा मोलसिरी वृक्षों से घिरी हुई चौहद्दी वाले पान की (चढ़ी हुई) लतरों से व्याप्त सुपारी के वनों से अलंकृत तथा वनलक्ष्मी के निवासगृह प्रतीत होने वाले लताकुञ्जों से विराजित, मानों मतवाले गजराजों के कपोलमण्डलों से बहते हुए मदजल से सींचे गये अतएव मदजल की गन्ध के समान गन्ध वाले एलालताओं (इलाइची की लतर) के वन से निरन्तर अँधियारी बनाई गई, नखाग्रभागों में संलग्नहाथियों के कुम्भस्थलों से उत्पन्न मुक्ताफलों के लालची किरात सेनापतियों द्वारा मारे जाते हुए सैकड़ों सिहों वाली ।

**संस्कृत-व्याख्या—'अस्तीति'** अस्य दूरस्थेन विन्ध्याटवी नामेति कर्तृपदेन सम्बन्धः । अथ सा विन्ध्याटवी कीदृशी वर्तते ? सम्प्रति तामेव विशिनष्टि **पूर्वापरेति** । **पूर्वापरजलनिधिवेलावलग्ना**=पूर्वश्चापरश्चेति पूर्वापरौ प्राच्यप्र-तीच्यदिग्वर्तिनौ यौ जलनिधि समुद्रौ तयोः वेलयोः तीरयोरवलग्ना संयुक्ता, **मध्यदेशालङ्कारभूता**=मध्यदेशस्य मध्यवर्त्ति स्थानस्य अलङ्कारभूता भूषणस्व-रूपा, **भुवः**=पृथिव्याः, **मेखलेव**-रशनादामेव, **वनकरिकुलमदजलसेकसंव-र्धितैः**=वने कानने ये करिणः हस्तिनः तेषां कुलानि यूथानि तेषां मदजलस्य

दानवारिणः सेकेन सिञ्चनेन संवर्धितैः वृद्धि सम्प्राप्तैः, **अतिविकचधवलकुसुमनिकरं**=अतिविकचानाम् अतिविकसितानां धवलानां शुभ्राणां कुसुमानां पुष्पाणां निकरं समुदायम् अत्युच्चतया वृक्षाणाम् अत्यन्तम् उच्चतावशात्, **शिखरदेशलग्नं**=शिरोभागसंलग्नं, **तारागणं**=नक्षत्रमण्डलमिव, **उद्वहद्भिः**=धारयद्भिः, **पादपैः**=वृक्षैः, **उपशोभिता**=भूषिता, **मदकलकुररकुलदश्यमानमरिचपल्लवः**=मदकलैः मदोन्मत्तैः कुरराणां मत्स्यनाशनानां कुलानि समूहाः तैः दश्यमानाः चञ्चुपुटेन संदश्य आस्वाद्यमानाः मरिचानां कोलकानां पल्लवाः किसलयानि यस्यां सा, **करिकलभकरमृदिततमालकिसलयामोदिनी**=करिणां हस्तिनां कलभाः तेषां करैः शुण्डादण्डैः मृदितानि मर्दितानि यानि तमालकिसलयादिपिच्छपल्लवानि तेषाम् आमोदः सुगन्धिः विद्यते यस्यां सा तादृशी, **मधुमदोपरक्तकेरलीकपोलकोमलच्छविना**=मधु मद्यं तस्य यो मदः मदिरापानेन मत्तता तेन उपरक्ताः रक्तवर्णीभूताः ये केरलीकपोलाः केरलदेशोत्पन्नानां सुन्दरीणां कपोलाः गल्लप्रदेशाः तेषामिव कोमला मृद्वी छविः कान्तिः यस्य तेन, **सञ्चरद्वनदेवताचरणालक्तकरसरञ्जितेनेव**=सञ्चरन्तीनां व्रजन्तीनां वनदेवतानां काननाधिष्ठातृदेवीनां चरणालक्तकरसैः पादस्थितयावकद्रवैः रञ्जितेनेव रक्तीकृतेनेव, **पल्लवचयेन**=किसलयसमूहेन, **सञ्छादिता**=आच्छादिता **शुककुलदलितदाडिमीफलद्रवार्द्रीकृततलैः**=शुककुलैः कीरसमूहैः दलितानि चञ्चुभिः विदारितानि यानि दाडिमीफलानि तेषां द्रवैः रसैः आर्द्रीकृतानि आर्द्रत्वमुपनीतानि तलानि अधोवर्त्तिस्थानानि येषां तैः, **अतिचपलकपिकुलकम्पितकक्कोलच्युतपल्लवफलशबलैः**=अतिचपलैः अत्यन्तचञ्चलैः कपिकुलैः वानरसमूहैः कम्पितेभ्यः आन्दोलितेभ्यः कक्कोलेभ्यः तरुविशेषेभ्यः च्युतानि पतितानि यानि पल्लवफलानि तैः शबलैश्चित्रैः, **अनवरतनिपतितकुसुमरेणुपांशुलैः**=अनवरतनिपतितानां निरन्तरप्रच्युतानां कुसुमानां पुष्पाणां रेणुभिः परागधूलिभिः पांशुलैः सरजस्कैः, **पथिकजनरचितलवङ्गपल्लवसंस्तरैः**=पथिकजनैः पान्थपुरुषैः रचिताः निर्मिताः, **लवङ्गपल्लवानां**=लवङ्गवृक्षविशेषकिसलयानां संस्तरा आसनानि येषु तैः तथोक्तैः, **अतिकठोरनारिकेलकेतकीकरीरबकुलपरिगतप्रान्तैः**=

अतिकठोरा अत्यन्तकठिनाः परिपक्वा इत्यर्थः, ये नारिकेलाः लाङ्गलिवृक्षाः, केतक्यः क्रकचपर्णाः करीरा पत्रविहीनाः कण्टकसहिताः वृक्षविशेषाः, बकुलाश्च तैः परिगताः परितो व्याप्ताः प्रान्ताः पर्यन्तप्रदेशाः येषां तैः तथोक्तैः, **ताम्बूलीलतावनद्धपूगषण्डमण्डितैः**=ताम्बूलीलताभिः नागवल्लीव्रततीभिः अवनद्धं संबद्धं यत् पूगषण्ड क्रमुकवन तेन मण्डितैः अलंकृतैः, अत एव **वनलक्ष्मीवासभवनैरिव**=वनलक्ष्म्याः विपिनश्रियः वासभवनैरिव वसतिगृहैरिव, **लतामण्डपैः**=वल्लीगृहैः, **विराजिता**=सुशोभिता, **उन्मदमातङ्गकपोलस्थलगलितसलिलसिक्तेनेव**=उन्मदानां मदोन्मत्तानां मातङ्गानां गजानां कपोलस्थलेभ्यः गण्डप्रदेशेभ्यः गलितैः च्युतैः सलिलैः मदजलैः सिक्तेनेव सिञ्चितेनेव अतएव **मदगन्धिना**=मदगन्धयुक्तेन, **निरन्तरं**=सघनं यथा स्यात्तथा, **एलालतावनेन**=एलाचन्द्रवालावल्लीनां वनेन विपिनेन **अन्धकारिता**=अन्धकारयुक्ता, **नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः**=नखानां नखराणां मुखेषु अग्रभागेषु लग्नानि संसक्तानि यानि इभकुम्भमुक्ताफलानि सिंहविदारितगजमस्तकमांसपिण्डोद्भवानि मौक्तिकानि तेषु लुब्धैः लोलुपैः, **शबरसेनापतिभिः**=भिल्लसेनानायकैः, **अभिहन्यमानकेसरिशता**=अभिहन्यमानं व्यापाद्यमानं केशरिशतं मृगेन्द्रमण्डलं यस्यां सा तथोक्ता।

**टिप्पणी**—यहाँ वाक्य से प्रारम्भ में आई हुई 'अस्ति' क्रिया का सम्बन्ध वाक्य के अन्त में स्थित '**विन्ध्याटवी नाम**' से है । **वेला**—समुद्र का किनारा । **मध्यप्रदेश**—'हिमवद्विन्ध्ययोर्मध्ये' यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः । **मनु**-'**मेखला**—करधनी, 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः । **उद्वहद्भिः**—उत् वह+शतृ तृ० ब० व० । '**शिखरदेशलग्नं तारागणमिव**' में जात्युत्प्रेक्षालंकार है । **कुरर**=क्रौञ्चपक्षी । **वश्यमान**-कुतरे जाते हुए । **कलभ**=हाथी का बच्चा, 'कलभः करिशावकः' इत्यमरः । **मृदित**—मृद्+क्त—मसला हुआ । **केरली**—केरल देश की स्त्री । **अलक्तक**—महावर । **चयः**—राशि, समूह । 'कपोल-कोमलच्छविना' में **लुप्तोपमा** तथा '**रंजितेनेव**' में **क्रियोत्प्रेक्षा** है । दोनों के **अङ्गाङ्गिभाव से सङ्कर** । **दाडिमीफल**—अनार का फल । **कक्कोल**—शीतल चीनी का वृक्ष । **शबलाः**—चितकबरे ।

**'सारसितसमदसारसम्'** यहाँ अनुप्रास की अनुपम छटा छिटक रही है । **वाचाल**-शब्दयुक्त । **वीचि**=लहर । **शीकर**–जल की बूंद, 'शीकरोऽम्बुकण: स्मृत:' । **'अलिकुलपटल'**–यहाँ कुल तथा पटल दोनों शब्द पर्यायवाची हैं । ऐसी स्थिति में एक ही शब्द के कथन से उक्त अर्थ निकल आता है अत: दूसरे का ग्रहण करना निरर्थक है । **''कादम्बकदम्बकै:''**–कलहंसों के समूहों से, 'कादम्ब: कलहंस: स्यात्'; 'स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्' इत्यमर: । **'रसितानुमेयै: में मीलितालंकार'** ध्वनित हो रहा है । इस प्रकार यहाँ वस्तु से अलङ्कार-ध्वनि है ।

**अभिषेकावतीर्णपुलिन्दराजसुन्दरीकुचचन्दनधूलिधवलिततरङ्गम्, उपान्तजातकेतकीरज:पटलबद्धकूलपुलिनम्, आसन्नाश्रमागततापसक्षालिताद्र वल्कलकषायपाटलतटजलम्, उपतटविटपिपल्लवपुटानिलवीजितम्, अविरलतमालवीथिकान्धकारिताभि: बालिनिर्वासितेन सञ्चरता प्रतिदिनमृष्यमूकवासिना सुग्रीवेणावलुप्तफललघुलताभि:, उद्वासितापसानां देवार्च्चनोपयुक्तकुसुमाभि: उत्पतज्जलचरपतङ्गपक्षपुटविगलितजलबिन्दुसेकसुकुमारकिसलयाभि: लतामण्डपतलशिखण्डिमण्डलारब्धताण्डवाभि: अनेककुसुमपरिमलवाहिनीभिर्वनदेवताभि: श्वासवासिताभिरिव वनराजिभिरुपरुद्धतीरम्, अपरसागरशङ्किभि: सलिलमादातुमवतीर्णैर्जलधरैरिव बहलपङ्कमलिनैर्वनकरिभिरनवरतमापीयमानसलिलम् अगाधमनन्तमप्रतिमम् अपां निधानं पम्पाभिधानं पद्मसर: । यत्र च विकचकुवलयप्रभाश्यामायमानपक्षपुटान्यद्यापि मूर्तिमद्रामशापग्रस्तानीव मध्यचारिणामालोक्यन्ते चक्रवाकनाम्नां मिथुनानि ।**

**हिन्दी-अनुवाद**–जो अभिषेक (जलावगाहन) के निमित्त उतरी हुई भील चौधरियों की सुन्दरियों के उरोजों पर उपलिप्त चन्दन के चूर्ण से शुभ्रकृत तरङ्गों वाला था, जो तटभागों पर छहराई हुई केतकियों के परागपुञ्ज से

संकुल निकटवर्ती आश्रमों से आए हुए तपस्वियों द्वारा प्रक्षालित अतएव गीले वल्कलों (के रस) के कारण कषाय (कसैला) तथा श्वेतरक्त तटीय जलवाला था, जो तट के समीपवर्ती वृक्षों के पल्लवसमूहों की वायु से वीजित (पंखा झला गया) था, जो सघन तमालवृक्षों की पंक्तियों से अँधियारी बनाई गई-(बड़े भाई) बालि द्वारा निर्वासित (अतएव वहाँ) प्रतिदिन पर्यटन करने वाले ऋष्यमूक पर्वत पर निवास करने वाले (वनराज) सुग्रीव द्वारा भक्षित फलों के कारण हल्की (भारहीन) लताओं वाली–जल में निवास करने वाले तपोधनियों के देवार्चन में काम आने वाले पुष्पों वाली–उड़ते हुए जलचारी विहङ्गों के पक्षद्वय से झरे हुए जलबिन्दुओं के सिञ्चनप्रभाववश सुकोमल कोयलों वाली–लताकुञ्जों के अधः प्रदेशों में मयूरमण्डल द्वारा प्रारम्भ किए गए नर्तन वाली–विविध जाति के पुष्पों की सुरभि का वहन करने वाली तथा वनदेवियों द्वारा (अपनी) निश्वासवायु से सुवासित की गई प्रतीत होने वाली वनपंक्तियों से परिव्याप्त तटों वाला था, जो दूसरे समुद्र की आशङ्का (भ्रान्ति) करने वाले अतएव जलग्रहण के लिये (नीचे) उतरे हुए बादलों से प्रतीत होने वाले-सघन पङ्क से मलिनीभूत जङ्गली हाथियों द्वारा निरन्तर पिये जाते हुए जल-वाला था, जो अथाह, अपरिमित एवं (अक्षय-जलत्वात्) अद्वितीय था।

जिस (पम्पासरोवर) में प्रफुल्लित नीलकमलों की कान्ति से श्यामलवर्णी पक्षद्वय वाले चक्रवाक नामक पक्षियों के जोड़े आज भी 'मध्यचारी' अर्थात् वन में भ्रमण करने वाले व्यक्ति द्वारा मानों (भगवान्) श्रीराम के मूर्तिमान् शाप द्वारा ग्रस्त हुए देखे जाते हैं।

**संस्कृत-व्याख्या—अभिषेकावतीर्णपुलिन्दराजसुन्दरीकुचचन्दनधूलिधवलित-तरंगम् =** अभिषेकाय मज्जनार्थम् अवतीर्णाः सलिलान्तःप्रविष्टाः या पुलिन्द-राजस्य शबराधिपतेः सुन्दर्यः कामिन्यः तासां ये कुचाः वक्षोजाः तेषां चन्दन-धूलिभिः लिप्तशुष्कमलयजरजोभिः धवलिताः शुभ्रीकृताः तरङ्गा ऊर्मयो यस्य तत् तादृशम् **उपान्तजातकेतकीरजःपटलबद्धकूलपुलिनं =** उपान्ते पानीयनिकटे जातानाम् उत्पन्नानां केतकीनां मालतीपुष्पाणां रजःपटलैः धूलिसमूहैः बद्धं

रचितं कूले तटसमीपे पुलिनं सैकतं यस्य तत्, **आसन्नाश्रमागततापसक्षालितार्द्र-वल्कलकषायपाटलतटजलं**=आसन्नाः समीपवर्तिनः ये आश्रमाः तपस्विस्थानानि तेभ्यः आगतैः प्राप्तैः तापसैः मुनिजनैः क्षालितानां धौतानाम् आर्द्राणां जलाविलानां वल्कलानां वृक्षत्वचां कषायैः तुवरैः पाटलं श्वेतरक्तं तटजलं तीरान्तिकसलिलं यस्य तत् तादृशम्, **उपतटविटपिपल्लवपुटानिलवीजितं**=तटस्य समीपमुपतटं तत्र उपतटे ये विटपिनः पादपाः तेषां पल्लवाः किसलयानि तैः यः अनिलः वायुः तेन वीजितं व्यजनेनेवाचरितम्, **अविरलतमालवीथिकान्धकारिताभिः**=अविरला सान्द्रा या तमालवीथिका तापिच्छपङ्क्तिः तया अन्धकारिताभिः कृतान्धकाराभिः, **वालिनिर्वासितेन**=वालिना निर्वासितेन निष्कासितेन, **प्रतिदिनं**=प्रत्यहं, **सञ्चरता**=तत्रागच्छता, **ऋष्यमूकवासिना**=ऋष्यमूकनिवसनशीलेन, **सुग्रीवेण**=वाल्यनुजेन, **अवलुप्तफललताभिः**=अवलुप्तानि दूरीकरोति फलानि याभ्यः ताः, अतएव लघ्व्यः फलभाररहिताः लताः व्रतत्यो यासु ताभिः तादृशीभिः, **उदवासितापसानां**=उदके जले वसन्तीत्युदवासिनश्च ते तापसास्तपस्विनश्चेति तेषां तथोक्तानाम्, **देवार्चनोपयुक्तकुसुमाभिः**=देवार्चनेषु देवपूजासु उपयुक्तानि उचितानि कुसुमानि पुष्पाणि यासु ताभिः तथोक्ताभिः, **उत्पतज्जलचरपतङ्गपक्षपुटविगलितजलबिन्दुसेकसुकुमारकिसलयाभिः**=उत्पतन्त उड्डीय गच्छन्तो ये जलचरा नक्रादयः पतङ्गाः पक्षिणः तेषां पक्षपुटेभ्यः विगलिताः च्युताः ये जलबिन्दवः सलिलकणाः तैः सेकः तेन सुकुमाराणि मृदुलानि किसलयानि पल्लवानि यासां ताभिः तथोक्ताभिः, **लतामण्डपतलशिखण्डिमण्डलारब्धताण्डवाभिः**=लतामण्डपानां लताच्छादितप्रान्तानां तलेषु अधः प्रदेशेषु शिखण्डिमण्डलेन मयूरसमूहेन आरब्धं प्रारब्धं ताण्डवं नृत्यं यासु ताभिः तथोक्ताभिः, **अनेककुसुमपरिमलवाहिनीभिः**=अनेकेषां बहुप्रकाराणां कुसुमानां पुष्पाणां परिमलं गन्धं वहन्तीति ताः तादृशीभिः, **वनदेवताभिः**=काननाधिष्ठातृदेवीभिः, **श्वासवासिताभिरिव**=निःश्वाससुगन्धीकृताभिरिव, **वनराजिभिः**=अरण्यपङ्क्तिभिः, **उपरुद्धतीरं**=उपरुद्धानि व्याप्तानि तीराणि तटानि यस्य तत्, पम्पासरोविशेषणमिदम् । **अपरसागरशङ्किभिः**=अपरः भिन्नः सागरः समुद्रः इति शङ्कां

जनयतीति तैः तथोक्तैः, **सलिलं**=जलम्, **आदातुं**=गृहीतुम्, **अवतीर्णैः**=पम्पासरोवरेऽवतरितैः, **जलधरैरिव**=मेघैरिव, **बहलपङ्कमलिनैः**=बहलपङ्कैः शरीरलग्नाधिककर्दमैः मलिनाः श्यामाः तैः तथोक्तैः, **वनकरिभिः**=आरण्यकहस्तिभिः **अनवरतं**=निरन्तरम् **आपीयमानसलिलं**=आपीयमानानि सलिलानि जलानि यस्य तत् तादृशम्, **अगाधं**=अप्राप्ततलम्, **अनन्तं**=अन्तरहितम्, **अप्रतिमं**=अद्वितीयम्, **अपां**=जलानां, **निधानं**=निधिस्वरूपं, **पम्पाभिधानं**=पम्पासंज्ञकं, **पद्मसरः**=पद्मानां कमलानां सरः कासारः । **यत्र च**=यस्मिन् सरोवरे, **विकचकुवलयप्रभाश्यामायमानपक्षपुटानि**=विकचानि विकसितानि यानि कुवलयानि नीलोत्पलानि तेषां याः प्रभाः कान्तयः ताभिः श्यामायमानानि श्यामवदाचरन्ति पक्षपुटानि येषां तानि तथोक्तानि, **मध्यचारिणां** पम्पासरोवरमध्ये विचरणशीलानां, **चक्रवाकनाम्नां**=चक्रवाकसंज्ञकाना पक्षिणां, **मिथुनानि**=युगलानि, **अद्यापि**=अधुनापि, **मूर्तिमद्रामशाप प्रस्तानीव**=मूर्तिमान् देदीप्यमानरूपो यो रामस्य दशरथनन्दनस्य शापः अभिसम्पातः तेन प्रस्तानिव, **आलोक्यन्ते**=दृश्यन्ते ।

**टिप्पणी**–**अभिषेक**–स्नान । **पुलिन्दराज**–भीलों का स्वामी । '**अभिषेकावतीर्ण**···**तरङ्गम्**' में अतिशयोक्ति अलङ्कार । **पुलिनम्**–रेतीला तट । 'उपान्त··· पुलिनम्' यहाँ भी अतिशयोक्ति अलङ्कार है । **कषाय**–**कसैला**, 'तुवरस्तु कपायोऽस्त्री' । **पाटल**–गुलाबी, 'श्वेतरक्तस्तु पाटलः' इत्यमरः । **उदवासितापसानां**–जल में रहकर तपस्या करने वाले तपस्वियों की । **पतङ्ग**–पक्षी । 'लता··· ताण्डवाभिः' यहाँ अनुप्रास अलङ्कार है । **ताण्डव**–नृत्य, 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्' इत्यमरः । 'अनेक वासितामिरिव' में क्रियोत्प्रेक्षालङ्कार है । बहलपङ्क-अत्यधिक कीचड़ । 'अपर··सलिलम्' में जातिस्वरूपोत्प्रेक्षा है । "यत्र··मिथुनानि'—यहाँ अन्तर्कथा इस प्रकार है कि सीता के विरह से व्यथित राम का चक्रवाक पक्षियों ने उपहास किया । तब राम ने उन्हें शाप दे दिया कि तुम्हें भी मेरे ही समान दुःखी होकर रात्रि व्यतीत करनी पड़ेगी । इसी शाप के कारण चक्रवाक युगल रात्रि में एक दूसरे से अलग हो जाता है ।

'ग्रस्तानीव' में क्रियोत्प्रेक्षालङ्कार है।

तस्यैव पद्मसरसः पश्चिमे तीरे राघवशरप्रहारजर्जरितजीर्णताल-तरुषण्डस्य च समीपे दिग्गजकरदण्डानुकारिणा जरदजगरेण सततमा-वेष्टितमूलतया बद्धमहालवाल इव तुङ्गस्कन्धावलम्बिभिरनिलवेल्लि-तैरहिनिर्म्मोकैर्धृतोत्तरीय इव, दिक्चक्रवालपरिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासञ्चयेन प्रलयकालताण्डवप्रसारित-भुजसहस्रमुडुपतिशेखरमिव विडम्बयितुमुद्यतः, पुराणतया पतनभया-दिव गगनस्कन्धलग्नः, निखिलशरीरव्यापिनीभिरतिदूरोन्नतभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः, जरातिलकबिन्दुभिरिव कण्टकैरा-चिततनुः, इतस्ततः परिपीतसागरसलिलैर्गगनागतैः पत्ररथैरिव शाखा-न्तरेषुनिलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्य-दृष्टशिखरः तुङ्गतया नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः।

हिन्दी-अनुवाद—उसी कमल-सरोवर के पश्चिमी तट पर, श्रीराम के बाण-प्रहार से जर्जर हुए (छिन्न-भिन्न) तालवृक्षों के वन के समीप (एक) भारी-भरकम, पुरातन (पुराना) सेमर का पेड़ था—जो दिग्गजों के शुण्डादण्डों (सूँड़) का अनुकरण करने वाले पुराने अजगर द्वारा निरन्तर मूलभाग को लपेटे रहने के कारण बँधे हुए विशाल थाल्हे से युक्त प्रतीत होता था, जो ऊँचे स्कन्धों (तनों) में लटकते हुए तथा पवन द्वारा आन्दोलित सर्पकञ्चुकों के कारण उत्तरीय से अलङ्कृत प्रतीत होता था, जो मानो दिङ्मण्डल का आयाम (विस्तार या क्षेत्रफल) नापते हुए संसार के अन्तराल (मध्यभाग) में फैले हुए (अपने) शाखासमूह से प्रलयकालीन ताण्डवनृत्य में फैलाई गई हजारों भुजाओं वाले चन्द्रशेखर भगवान् शिव का अनुकरण करने के लिए उद्यत प्रतीत होता था, जो जीर्ण-शीर्ण होने के कारण गिर जाने की आशंका वश आकाश के कन्धे पर आश्रित प्रतीत होता था, जो सम्पूर्ण शरीर में परि-

व्याप्त तथा वृद्धावस्था के कारण बड़ी दूर तक उभरी हुई शिराओं (अस्थि-बन्धनों) से परिवेष्टित (वृद्ध-पुरुष) की भाँति सम्पूर्ण वृक्ष में विद्यमान तथा प्राचीन होने के कारण बड़ी दूर तक उठी हुई लताओं से परिवेष्टित था जो वृद्धावस्था में उत्पन्न तिलबिन्दुओं (काले तिलों) से व्याप्त शरीर की भाँति काँटों से भरे शरीर वाला था, जो इधर-उधर आकाश मण्डल से उतरे हुए–सागर-जल पिए हुए–(पिये गए) जल के भार से अलसाये हुए–क्षणभर के लिए शाखाओं के अन्तराल में चुपचाप बैठे हुए तथा पल्लवों को गीला बना देने वाले विहंगों की भाँति इधर-उधर गगनमण्डल से आए-समुद्रजल पिये हुए (पिये गए) जलभार वश मन्द गति वाले क्षणभर के लिए शाखाओं के भीतर गुप्त रूप से बैठते हुए तथा (जल-से) पल्लवों को भिगो देने वाले मेघमण्डल द्वारा भी अदृष्ट शिखरवाला था, जो (अपनी) ऊँचाई के कारण इन्द्रोपवन नन्दन का सौन्दर्य देखने के लिए समुद्यत प्रतीत होता था।

**संस्कृत-व्याख्या–तस्यैव**=पम्पाभिधेयस्यव, **पद्मसरसः**=पद्मसरोवरस्य, **पश्चिमे तीरे**=पश्चिमे, तटे, **राघवशरप्रहारजर्जरितजीर्णतालतरुषण्डस्य**=राघवस्य रामचन्द्रस्य ये शराः बाणाः तेषां प्रहारेण जीर्णानां प्राचीनानां तालतरूणां तालवृक्षाणां षण्डस्य समुदायस्य च समीपे निकटे, **महान्**=विशालः, **जीर्णः**=पुरातनः, **शाल्मलीवृक्षः**=रोचनाख्यस्तरुरस्तीति दूरेणान्वयः। अत्र प्रथमान्तानि पदानि शाल्मलीवृक्षविशेषणानि। **दिग्गजकरदण्डानुकारिणा**=दिग्गज ऐरावतादिः तस्य यः करदण्डः शुण्डादण्डः तमनुकर्तुं शीलं यस्य तेन तथोक्तेन, **जरदजगरेण**=जरन् जरां प्राप्नुवन् वृद्धो योऽजगरस्तन्नामकः पृथुलसर्पः तेन तादृशेन, **सततं**=निरन्तरम्, **आवेमूलतया**=आवेष्टितं वलयितं मूल चरणभागः यस्य तस्य भावः तत्ता तया, **बद्धमहालवाल इव**=बद्धं निर्मितं महत् विशालम् आलवालम् आवापः यस्य स इव क्रियोत्प्रेक्षा।' **तुङ्गस्कन्धावलम्बिभिः**=तुङ्गम् उन्नतं स्कन्धं प्रकाण्डभागं स्कन्धमागञ्च अवलम्बितुं शीलं येषां तैः तथोक्तैः, **अनलवेल्लितैः**=पवनचालितैः, **अहिनिर्मोकैः**=सर्पकञ्चुकैः, **धृतोत्तरीय इव**=गृहीतोपसंव्यानवस्त्र इव, **दिक्चक्रवालपरिमाणमिव**=दिशां ककुभां चक्रवालं मण्डलं तस्य परिमाणमिव इयत्तापरिमितमिव, **गृह्णता**=धारयता, **भुवनान्त-**

**रालविप्रकीर्णेन**=भुवनान्तराले संसारमध्य-भागे विप्रकीर्णं इतस्तो विस्तारितः तेन, **शाखासञ्चयेन**=लतासंदोहेन, **प्रलयकालताण्डवप्रसारितभुजसहस्रम्**= प्रलयकाले कल्पान्तसमये यत् ताण्डवम् उद्धतनृत्यं तत्र प्रसारितम् इतस्ततो-विपर्यस्तं भुजसहस्रम् अनेकतरुबाहवो येन स तं तादृशम्, **उडुपतिशेखरं**= उडुपतिः तारापतिश्चन्द्र शेखरो मस्तकालङ्कारो यस्य तं महादेवं, **विडम्बयितुं** =अनुकर्तुं, **उद्यत इव**=संनद्ध इव, **पुराणतया**, **पतनभयादिव**=स्खलनश-ङ्कयेव, **गगनस्कन्धलग्नः**=गगनस्य आकाशस्य स्कन्धे प्रकाण्डे लग्नः यस्य तादृशः, **निखिलशरीरव्यापिनीभिः**=निखिलं समस्तं यत् शरीरं वपुः तद् व्याप्तुं शीलं यासां तादृशीभिः, **अतिदूरोन्नताभिः**=अतिविप्रकृष्टमुत्थिताभिः, **जीर्णतया** प्राचीनतया, **शिराभिरिव**=अस्थिबन्धनैरिव, **लतिभिः**=लताभिः **परिगतः** =परिवेष्टितः, **जरातिलकबिन्दुभिरिव**=जरायां वृद्धावस्थायां ये तिलकबिन्दवः कृष्णतिलसदृशाः चिह्नविशेषाः तैरिव, **कण्टकैः**=क्षुद्रशत्रुभिः, **आचिततनुः**= आचिता व्याप्ता तनुः देहः यस्य सः तथोक्तः, **इतस्ततः**=समन्तात्, **परिपीतसा-गरसलिलैः**=परिपीतानि सागराणां समुद्राणां सलिलानि पानीयानि यैस्तैः, **गगनागतैः**=गगनात् आकाशात् आगतैः उपस्थितैः, **पत्ररथैरिव**=पक्षिभिरिव, **शाखान्तरेषु**=शाखानां स्कन्धानाम्, अन्तरेषु मध्येषु, **क्षणं**=क्षणमात्रं, **निलीयमानैः**=गुप्ततया स्थितवद्भिः, **अम्बुभारालसैः**=अम्बुभारालसैः= अम्बुभारेण पीतसलिलभारेण, अलसैः मन्थरगामिभिः, **आर्द्रीकृतपल्लवैः**= आर्द्रीकृतानि वर्षणेन क्लिन्नानि पल्लवानि किसलयानि यैस्तानि, तैः, **जलधर-पटलैः**=मेघसमूहै रपि, **अदृष्टशिखरः**=न दृष्टम्, अत्युन्नततया नेक्षितं शिखरं प्रान्तप्रदेशोः यस्य स तथोक्तः, **तुङ्गतया**=उन्नततया, **नन्दनवनश्रियं**= नन्दनवनस्य इन्द्रोद्यानस्य या श्रीः शोभा ताम्, **अवलोकयितुमिव**=वीक्षितुमिव, **अभ्युद्यत इव**=संनद्ध इव ।

**टिप्पणी—षण्ड**—समुदाय । जड़ वस्तु समुदाय के लिए 'षण्ड' शब्द का प्रयोग होता है । दिग्गज-पौराणिक मान्यता है कि आठ दिशाओं में आठ हाथी सम्भाले हुए हैं । वैज्ञानिक लोग इन्हें वायुमण्डल की संज्ञा से अभिहित करते

हैं । पूर्वादि दिशाओं के दिग्गज क्रमश: ये है–'ऐरावत: पुण्डरीको वामनः कुमदोऽञ्जनः । पुष्पदन्त: सार्वभौम: सुप्रतीकश्च दिग्गजा: ।' **आलवाल–थलहा** । 'दिग्गज···आलवाला इव' यहाँ 'दिग्गज में' 'लुप्तोपमा' तथा 'आलवाला इव' में वाच्या तथा क्रियोत्प्रेक्षालंकार हैं। दोनों का अङ्गाङ्गिभाव सङ्कर। **चक्रवाल**–मण्डल । **अन्तराल**–मध्यभाग । 'धृतोत्तरीय इव' में क्रियोत्प्रेक्षा । प्रलयकाल···शेखरमिव' यहाँ 'गृह्णतेव' 'उद्यत इव' में वाच्या तथा क्रियोत्प्रेक्षा 'विडम्बयितुम्' में आर्थी उपमा । इन सबका अङ्गाङ्गिभाव सङ्कर। पौराणिक मान्यता के अनुसार भगवान् शंकर प्रलयकाल में रुद्र रूप को धारण करके सहस्रों भुजाओं को फैलाकर ताण्डव नृत्य किया करते हैं। विडम्बयितुम् अनुकरण करने के लिए। **शिरा**–नाड़ी, 'नाड़ी तु धमनी शिरा' इत्यमर: । **व्रतति**–लता, 'वल्ली तु व्रततिर्लता इत्यमर: । **कण्टक**–क्षुद्र शत्रु, 'कण्टक: क्षुद्रशत्रौ च' इति विश्व: । **पत्ररथ**–पक्षी, 'पतत्पत्ररथाण्डजा:' इत्यमर: । '**इस्तत: शिखर:**' यहाँ वाच्योपमा तथा अतिशयोक्ति अलङ्कार है। नन्दन इन्द्र का उद्यान, 'अथ नन्दनम् इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि' इति हैम: । 'तुङ्गतया···अभ्युद्यत:' यहाँ 'अवलोकयितुमिव' में क्रियोत्प्रेक्षालङ्कार है।

**स्वसमीपवर्त्तिनामुपरि सञ्चरतां गगनतलगमनखेदायासितानां रविरथतुरंगमाणां सृक्कपरिस्रुतैः फेनपटलै: सन्देहिततूलराशिभिर्धवलीकृतशिखरशाख:, वनगजकपोलकण्डूयनलग्नमदनिलीनमत्तमधुकरमालेन लोहश्रृङ्खलाबन्धननिश्चलेनेव कल्पस्थायिना मूलेन समुपेत:, कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः सजीव इव मधुकरपटलै:, दुर्योधन इवोपलक्षितशकुनिपक्षपात:, नलिननाभ इव वनमालोपगूढ:, नवजलधरव्यूह इव नभसि दर्शितोन्नतिः, अखिलभुवनतलावलाकनप्रसाद इव वनदेवतानाम्, अधिपतिरिव दण्डकारण्यस्य, नायक इव सर्ववनस्पतीनाम्, सखेव विन्ध्यस्य, शाखाबाहुभिरुपगुह्येव विन्ध्याटवीमवस्थितो महान् जीर्ण: शाल्मलीवृक्ष: ।**

**हिन्दी-अनुवाद**—जो अपने निकटवर्ती—(अपने) ऊर्ध्वभाग में सञ्चरण करने वाले—आकाशतल पर पर्यटन करने के प्रयास से थके हुए—सूर्य के रथवाहा अश्वों के ओष्ठप्रान्तों से विगलित तथा तूल राशि (रुई के ढेर) को सन्देह का विषय बनाने वाले फेन समूह से शुभ्र बनाई गई शिखरवर्तिनी शाखाओ वाला था, जो बनैले हाथियों के कपोलमण्डलों के कण्डूयन (खर्जूयन अथवा खुजलाहट) से उत्पन्न मदजल पर बैठे हुये मदमत्त भ्रमरों की माला से युक्त अतएव (कालिमा की समता के कारण) लौहशृंखला के नियन्त्रणवश स्थिरीभूतकल्पान्तवेला तक अक्षुण्ण रहने वाले मूल मे समुपेत प्रतीत होता था, जो कोटरों के मध्यभाग में प्रविष्ट तथा देदीप्यमान मधुकर मण्डलों से सजीव (श्वासादिप्राण-युक्त) प्रतीत होता था, जो (जनसमूह द्वारा अपने मामा) शकुनी के प्रति देखे गये पक्षपात (स्वीकृति या समर्थन) वाले दुर्योधन की भाँति (लोगों द्वारा) देखे गये पक्षियों के पंखों के पतनवाला था, जो (आप्रपदीन) बनमाला द्वारा आलिङ्गित कमलनाभ विष्णु की भाँति वनपंक्तियो से आच्छादित था, जो श्रावण मास मे वृद्धि प्रदर्शित करने वाले नवीन मेघमण्डल की भाँति आकाश में उच्चता प्रदर्शित करने वाला था, जो समस्त पृथ्वीमण्डल का पर्यवेक्षण करने के लिए वनदेवियों का प्रासाद (अट्टालिका) प्रतीत होता था, जो दण्डकवन का स्वामी प्रतीत होता था, जो (बिना पुष्प के ही फलने वाली) समस्त वनस्पतियों का नायक प्रतीत होता था, जो विन्ध्यपर्वत का मित्र प्रतीत होता था और जो शाखाओं रूपी भुजाओं से विन्ध्याटवी का आलिङ्गन करके अव्यवस्थित प्रतीत होता था ।

**संस्कृत-व्याख्या-स्वसमीपवर्त्तिनां** = निजान्तिकस्थायिनाम्, **उपरि** = ऊर्ध्वं, **सञ्चरतां** = गच्छतां, **गगनतलगमनखेदायासितानां** = गगनतले आकाशतले गमनेन सञ्चारेण यः खेदः परिश्रमः तेन खेदमुपगतानां तेन आयासितानां, **रवितुरङ्ग-माणां** = सूर्यरथनियुक्ताश्वानां, **सृक्कपरिस्रुतैः** = सृक्काभ्याम् ओष्ठप्रान्ताभ्यां परिस्रुतैः पतितैः, **सन्देहिततूलराशिभिः** = सन्देहित. सन्देहविषयीकृतः तूलराशिः कार्पासकपिण्डः यैस्तैः, **फेनपटलैः** = श्वेतकसमूहैः, **धवलीकृतशिखरशाखः** = धवलीकृताः श्वेनीकृता शिखरशाखा अग्रस्थायिन्यःशाखा यस्य सः, **वनगजकपोलकण्डू-**

**यनलग्नमदनिलीनमत्तमधुकरमालेन**=वनगजानां काननहस्तिनां कपोलयोः गण्डयोः कण्डूयनेन खर्जनेन लग्नेषु सक्तेषु मदेषु दानवारिषु निलीना अवस्थिताः मत्ताः मधुपानेन क्षीबाः मधुकरमालाः भ्रमरपङ्क्तयो यत्र तेन तादृशेन, **लोह-शृंखलाबन्धननिश्चलेनेव** =लोहशृंखलया लोहनिगडेन यद् बन्धनं नियन्त्रणं तेन निश्चलं स्थिरं तेनेव विद्यमानेन,**कल्पस्थायिना** = प्रलयपर्यन्तं तिष्ठता, मूलेन, **समुपेतः**=संयुक्तः, **कोटराभ्यन्तरनिविष्टैः** =कोटराभ्यन्तरे कोटरमध्ये निविष्टैः निलीनैः, **स्फुरद्भिः** = दीप्यमानैः, **मधुकरपटलैः**=भ्रमरसमूहैः, **सजीव इव** = श्वासादिप्राणयुक्त इव, **दुर्योधन इव**=सुयोधन इव, **उपलक्षितशकुनिपक्षपातः**= उपलक्षितः जनैर्दृष्टः; शकुनीनां पक्षिणां पक्षैः छदैः पातः पतन यस्मिन् स तादृशः, दुर्योधनपक्षे उपलक्षितः शकुनौ स्वमातुले पक्षपातः प्रणयः यस्य स तथोक्तः । **नलिननाभ इव** =नलिनं कमलं नाभौ यस्य स विष्णुरिव, **वनमालोप-गूढः** =वनमालया काननपङ्क्त्या **उपगूढ** आच्छादितः, विष्णुपक्षे वनमाला सर्व-र्तुपुष्पोज्ज्वला माला तया उपगूढ आश्लिष्टः । **नवजलधरव्यूह इव**=नवाः नूतनाः ये जलधारा मेघाः तेषां व्यूहः मण्डलं तद्वत्, **नभसि** =आकाशे, **दर्शितो-न्नतिः**=दर्शिता प्रकटिता उन्नतिः उच्चत्वं येन स तथोक्तः, जलधरव्यूहपक्षे,**नभसि** श्रावणे दर्शिता उन्नतिः वृद्धिः येन स तादृशः, **अखिलभुवनतलावलोकनप्रसाद इव**=अखिलानि समस्तानि यानि भुवनतलानि जगन्ति तेषाम् अवलोकनं निरीक्षणं तदर्थं प्रासादः राजभवनमिव, **वनदेवतानां** = अरण्याधिष्ठात्रीणां देवीनाम्, **दण्डकारण्यस्य**=दण्डकाख्यस्य वनस्य, **अधिपतिरिव** = स्वामी इव, **सर्ववनस्पतीनां**=पुष्पं विना फलं येषामेवंविधसर्वतरूणां, **नायक इव**= अध्यक्ष इव, **विन्ध्यस्य** = एतदाख्यपर्वतस्य, **सखा इव** = मित्रमिव, **शाखाबाहुभिः** शाखाः विटपाः ता एव बाहवः भुजाः तैः, **विन्ध्याटवीं**=विन्ध्यभूमिम्, **उपगुह्येव**=आश्लिष्येव, **अवस्थितः** = विद्यमानः, **महान्** =विशालः, **जीर्णः** =पुरातनः, **शाल्मलीवृक्षः**=सप्तपर्णतरुः ।

**टिप्पणी—सृक्क**—घोड़ों के ओष्ठप्रान्त, जबड़ा, 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः । 'स्वसमीप···शिखरशाखः' यहाँ अतिशयोक्ति अलङ्कार है । कल्प-एक सृष्टि की अवस्था, इसमें मन्वन्तर होते हैं तथा चारों युग एक हजार बार बीत

जाते हैं। एक कल्प में चार अरब बत्तीस करोड़ वर्ष होते हैं। कल्प के पश्चात् प्रलय हो जाती है। 'वनगज ·····समुपेतः' यहाँ काव्यलिङ्ग तथा उत्प्रेक्षालंकार का संकर है। मधुकरमालेन यहाँ 'माला' शब्द में 'गोस्त्रियोरुपसर्जनस्य' से ह्रस्व हो जाता है। 'कोटराभ्यन्तर····पटलैः' यहाँ गुणोत्प्रेक्षा है। शकुनि--(क) दुर्योधन के पक्ष में—शकुनि नामक दुर्योधन के मामा (ख) शाल्मलीवृक्ष के पक्ष में—पक्षि। नलिननाभ—भगवान विष्णु। वनमाला (क) विष्णु के पक्ष में—भगवान् विष्णु के गले में रहने वाली माला विशेष, जिसका लक्षण इस प्रकार है— 'आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता ॥" (ख) शाल्मलीवृक्ष के पक्ष में—वनों की पङ्क्ति। नभसि—(क) नवजलधरव्यूह के पक्ष में—श्रावण में, (ख) शाल्मलीवृक्ष के पक्ष मे—आकाश मे; 'नभः खं श्रावणो नभः' इत्यमरः। 'दुर्योधन····दर्शितोन्नतिः' यहाँ पूर्णोपमालङ्कार है। वनस्पति—इस प्रकार के सभी वृक्ष जिनपर बिना पुष्प के फल आते है। 'वनस्पतिर्वृक्ष-मात्रे विना पुष्पफलद्रुमे' इति विश्वः। 'अखिल···विन्ध्यस्य' यहाँ जात्युत्प्रेक्षा है। 'शाखाबाहुभिरेव' यहाँ निरङ्ग केवल रूपक तथा क्रियोत्प्रेक्षा का अङ्गाङ्गि-भाव संकर है।

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसन्धिषु जीर्ण-वल्कलविवरेषु च महावकाशतया विश्रब्धविरचितकुलायसहस्राणि दुरारोहतया विगलितविनाशभयानि नानादेशसमागतानि शुकशकुनि-कुलानि प्रतिवसन्ति स्म। यैः परिणामविरलसंहतिरपि स वनस्प-तिरविरलदलनिचयश्यामल इवोपलक्ष्यते दिवानिशं निलीनैः।

**हिन्दी-अनुवाद**—उस शाल्मलीवृक्ष (सेमर) पर शाखाओं के प्रान्त भागों में, कोटरों के भीतरी भागों में, पल्लवों के अन्तराल में, तनों एवं शाखाओं के जड़ों में, तथा पुराने वल्कलों (छालों अथवा पपड़ियों) के छिद्रों में प्रभूत (अत्यधिक) अन्तर्विस्तार (जगह) होने के कारण निर्विशङ्कभाव से हजारों घोसले बनाये हुए तथा दुरारोह (न चढ़ा जा सकने योग्य) होने के कारण

विनाशभय से मुक्त, भिन्न-भिन्न प्रदेशों से (बसेरा लेने के लिये) आए हुए शुकों तथा अन्य पक्षियों के कुल (सन्तति या समूह) रहा करते थे।

रात-दिन भीतर छिपे बैठे जिन (शुक-शकुनिकलों) के कारण वार्धक्यवश छिट-पुट-पत्रसमूह वाला भी वह सेमर का पेड़ सघन पत्रसमूह से हराभरा प्रतीत होता था।

**संस्कृत-व्याख्या**–**तत्र च**=शाल्मलीवृक्षे,**शाखाग्रेषु**=शालप्रान्तेषु, **कोटरोदरेषु**=कोटराणां स्कन्धविवराणाम् उदरेषु मध्यभागेषु,**पल्लवान्तरेषु**—किसलयमध्येषु,**स्कन्धसन्धिषु**=प्रकाण्डबन्धेषु,**जीर्णवल्कलविवरेषु**=जीर्णानि प्राचीनानि यानि वल्कानि त्वचः तेषां विवरेषु छिद्रेषु च, **महावकाशतया**=महान् अतिदीर्घ अवकाश अन्तर्विस्तारः येषां तेषां भावस्तया तथोक्तया, **विश्रब्धविरचितकुलायसहस्राणि**=विश्रब्धं सविश्वास निःसंदेहं यथा स्यात्तथा विरचितानि विनिर्मितानि कुलायसहस्राणि नीडसङ्घाः यैस्तानि तथोक्तानि, **दुरारोहतया**=दुःखेन क्लेशेन आरुह्यत इति दुरारोहः तस्य भावः तत्ता तया, **विगलितविनाशभयानि**=विगलितं हृदयात् प्रच्युतं विनाशभयं मृत्युभयं येषां तानि, **नानादेशसमागतानि**=नानदेशेभ्यः भिन्न-भिन्न प्रान्तेभ्यः समागतानि समायातानि, **शुकशकुनिकुलानि**=शुकाः कीराःशकुनयस्तदतिरिक्ताःपतत्रिणःतेषां कुलानि समूहाः, **प्रतिवसन्ति स्म**=निवसन्ति स्म। **दिवानिशं**=रात्रिन्दिवं, **निलीनैः**=निविष्टैः, **यैः**=शकुनिकुलैः, **परिणामविरलदलसंहतिरपि**=परिणामेन पुरातनया विरला स्वल्पा दलसंहृतिः पत्रसमुदायः यत्र स तथोक्तोऽपि,**सः वनस्पतिः**=शाल्मलीवृक्षः, **अविरलदलनिचयश्यामल इव**=अविरलानि सान्द्राणि यानि दलानि पर्णानि तेषां निचयः संहतिः तेन श्यामलः कृष्णवर्ण इव, **उपलक्ष्यते**=जनैरवलोक्यते।

**टिप्पणी**–**स्कन्धसन्धि**–दो तनों का सन्धिस्थल जहाँ पक्षी घोसला रख लिया करते हैं। **महावकाशतया**–बहुत स्थान वाला होने के कारण। **कुलाय**–घोंसला। **शकुनि**–पक्षी। **निचय**–समूह। **यैः···निलीनैः**'–यहाँ श्यामलता गुण है अतएव उसके उत्प्रेक्षण से उत्प्रेक्षालङ्कार है।

ते च तस्मिन् वनस्पतावतिवाह्य रजनीमात्मनीडेषु प्रतिदिनमुत्था-

याहारान्वेषणाय नभसि विरचितपङ्क्तयो मदकलहलधरहलमुखोत्क्षेपविकीर्णबहुस्रोतसमम्बरतले कालिन्दकन्यामिव दर्शयन्तः, सुरगजोन्मूलितविगलदाकाशगंगाकमलिनीशंकामुपजनयन्तः, दिवसकररथतुरगप्रभानुलिप्तामिव गगनतलमुपपादयन्तः, सञ्चारिणीमिव मरकतस्थलीं विडम्बयन्तः शैवालपल्लवावलीमिवाम्बरसरसि प्रसारयन्तः, गगनविततैः पक्षपुटैः, कदलीदलैरिव दिनकरखरकरनिकरपरिखेदिताऽन्याशामुखानि वीजयन्तः, वियति विसारिणीं शष्पवीथीमिवारचयन्तः, सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म शुकशकुनयः। कृताहाराश्च पुनः प्रतिनिवृत्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान् फलरसान् कलममञ्जरीविकारांश्च प्रहतहरिणरुधिरारुणस्फुशार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा अधरीकृतसर्वस्नेहनासाधारणेन गुरुणापत्यप्रेम्णा तस्मिन्नेव क्रोडान्तर्निहिततनया क्षपाः क्षपयन्ति स्म ।

हिन्दी-अनुवाद—अपने घोसलों में रात बिताकर प्रतिदिन (सवेरे) उठ कर चारा खोजने के लिये आकाश में कतार बाँधे हुये अतएव मानो गगन-मण्डल में मदिरा पान के कारण मनोज्ञ (प्रतीत होने वाले) बलराम के हलाग्रभाग अर्थात् फाल के आकर्षण से पर्यस्त (फैली या छितराई) हुई अनेक धाराओं वाली यमुना को प्रदर्शित करते हुये, सुरगज ऐरावत द्वारा उत्पाटित (उखाड़ी गई) अतएव नीचे गिरती हुई आकाशगङ्गा में उगी कमलिनी के भ्रम को उत्पन्न करते हुये, आकाशमण्डल को (अपनी देहप्रभा के कारण) मानो सूर्य के रथवाही (हरित) अश्वों की शारीरिक कान्ति से उपलिप्त हुआ ज्ञापित करते हुए, भ्रमणशील मरकतमणिखचित भूमि का मानो अनुकरण करते हुये, आकाश रूपी सरोवर में मानो सेवार की किसलय श्रेणी फैलाते हुये, आकाश में फैले हुए तथा कदलीपत्र के समान प्रतीत होने वाले पंखसमूह से मानो सूर्य की तीखी किरणों के समूह से थकाई गई दिशाओं के मुँह पर हवा करते हुए, आकाश में

विस्तारित नई घासों का कछार माना बनाते हुए तथा आकाश को इन्द्रधनुष से संवलित प्रस्तुत करते हुए वे शुकपक्षी उस सेमर के पेड़ पर विचरण किया करते थे ।

चारा खा-पो लेने के बाद पुनः लौटकर मारे-गये हरिण के रक्त से अरुणोकृत सिंह के नखाग्रभाग के समान पाटलवर्णी (श्वेत रक्त) चञ्चुपुट से अपने घोंसलों में अवस्थित चिरौटों (बच्चों) के लिए विविध प्रकार वाले फलों के रसों को तथा जङ्गलीधान की वल्लरियों से उद्भूत (पका) चावल देकर-सब प्रकार के स्नेह को नगण्य बना देने वाले, विलक्षण तथा भारी सन्तति प्रेम से उसी (पेड़) पर बच्चों को गोदी में लिए हुए रातें बिताया करते थे ।

**संस्कृत-व्याख्या**—'ते च=शुकशकुनयः विचरन्ति स्म' इति दूरेणान्वयः । **तस्मिन् वनस्पतौ**=शाल्मलीवृक्षे, **आत्मनीडेषु**=निजनिजकुलायेषु, **रजनीं**=रात्रिम्, **अतिवाह्य**=अतिक्रम्य, **प्रतिदिनं**=प्रत्यहम्, **उत्थाय**=उत्थानं विधाय, **आहारान्वेषणाय**=भक्ष्यमार्गणाय, **नभसि**=गगने, **विरचितपङ्क्तयः**=विरचिता विहिता पङ्क्तिः श्रेणी यैस्ते तथोक्ताः, **मदकलहलधरहलमुखोत्क्षेपविकीर्णबहुस्रोतसम्**=मदेन मधुपानेन कलो मत्तो यो हलधरो बलरामः तस्य हलमुखेन लाङ्गल प्रदेशेन य उत्क्षेप ऊर्ध्वदेशेक्षेपणं तेन विकीर्णानि विक्षिप्तानि बहूनि स्रोतांसि प्रवाहा यस्याः तां तथोक्तां, **कलिन्दकन्यामिव**=यमुनामिव, **अम्बरतले**=आकाशतले, **दर्शयन्तः**=प्रदर्शयन्तः, **सुरगजोन्मूलितविगलदाकाशगङ्गाकमलिनीशङ्काम्**=सुरगजेन-ऐरावतेन उन्मूलिता उत्पाटिता अतएव विगलन्ती अधःपतन्ती या आकाशगङ्गा मन्दाकिनी तस्याः कमलिनी पद्मिनी तस्याः शङ्कां भ्रान्तिम्, **उपजनयन्तः**=उत्पादयन्तः, **गगनतलं**=अम्बरतलं, **दिवसकररथतुरगप्रभानुलिप्तमिव**=दिवसकरस्य सूर्यस्य ये रथतुरगाः स्यन्दनायोजितशताश्वाः तेषां प्रभाभिः कान्तिभिः अनुलिप्तं रञ्जितमिव, **उपपादयन्तः**=विदधतः, **सञ्चारिणीं**=सञ्चरणशीलां, **मरकतस्थलीं**=नीलमणिभूमिं, **विडम्बयन्तः**=अनुकुर्वन्त इव, **अम्बरसरसि**=आकाशजलाशये, **शैवलपल्लवावलीं**=शैवलपल्लवस्य शैवालकिसलयस्य अवलीं पङ्क्तिं, **प्रसारयन्तः**=विस्तारयन्त इव, **कदलीदलैरिव**=रम्भापत्रैरिव, **गगनवितते**=गगने आकाशे

वितर्तैः विस्तृतैः,**पक्षपुटैः**=पक्षच्छेदैः, **दिनकरखरकरनिकरपरिखेदितानि**=दिन-करस्य सूर्यस्य खराः तीक्ष्णाः ये करनिकराः किरणसमूहाः तैः परिखेदितानि संक्लेशितानि, **आशामुखानि**=दिग्वदनानि वीजयन्तः, **वियति**=आकाशे, **विसारिणीं**=विस्तारिणीं, **शष्पवीथीं**=बालतृणपङ्क्तिम्, **आरचयन्तः**=निर्माणं कुर्वन्त इव, **अन्तरिक्षं**=आकाशं, **सेन्द्रायुधमिव**=शक्रधनुषा सह विद्य-मानमिव, **आदधानाः**=कुर्वन्तः, **शुकशकुनयः**=कीरपक्षिणः, **विचरन्ति स्म**=पर्यटन्ति स्म । **कृताहाराश्च**=कृतो विहित आहारो भोजनं यैस्ते तथोक्ताः । **पुनः**=भूयः, **प्रतिनिवृत्य**=परावृत्य, **आत्मकुलायावस्थितेभ्यः**=आत्मीयाः निजाः ये कुलायाः नीडानि तत्र अवस्थितेभ्यः वर्तमानेभ्यः, **शावकेभ्यः**=शिशुभ्यः, **विविधान्**=अनेकप्रकारान्, **फलरसान्**=सस्यनिर्यासान्, **कलममञ्ज-रीविकारान्**=कलमानां धान्यविशेषाणां मञ्जर्यो वल्लर्यस्तासां विकाराः परि-पक्वाः कणाः तांश्च, **प्रहतहरिणरुधिरानुरक्तशार्दूलनखकोटिपाटलेन**=प्रहतस्य विनाशितस्य हरिणस्य मृगस्य रुधिरं शोणितं तेन अनुरक्ता रक्तवर्णीकृता या शार्दूलनखकोटिः व्याघ्रनखाग्रप्रदेशः तद्वत् पाटलेन श्वेतरक्तेन, **चञ्चुपुटेन**=पञ्चाङ्गुलसम्पुटेन दत्त्वा, **अधरीकृतसर्वस्नेहेन**=अधरीकृतः निम्नत्वमापादितः सर्वस्नेहः समस्तप्रेम येन तेन तादृशेन अतएव, **आसाधारणेन**=असामान्येन, **गुरुणा**=महता, **अपत्यप्रेम्णा**=सन्तानस्नेहेन, **तस्मिन्नेव**=शाल्मलीतरावेव, **क्रोडान्तर्निहिततनयाः**=क्रोडानाम् उत्सङ्गानाम् अन्तर्निहिता मध्येषु रक्षिताः तनया अपत्यानि यैस्ते तथोक्ताः, **शुकशकुनयः**=कीरपक्षिणः, **क्षपाः**=त्रियामाः, **क्षपयन्ति स्म**=अतिवाहयन्ति स्म ।

**टिप्पणी—नीड—**घोंसला, **'कुलायो नीडमस्त्रियाम्'** इत्यमरः । **अतिवाह्य**=व्यतीतकर । अति+वह्+णिच्+क्त्वा√ल्यप् । **'मदकल······स्रोतसम्'** भागवत पुराण की कथा है कि एक समय नदी के तट पर मदमत्त होकर विचरण करते हुए बलराम ने यमुना को विहार के लिए बुलाया । यमुना ने बलराम के वचनों की अनसुनी कर दी । तब क्रुद्ध होकर बलराम ने हल के अग्रभाग से यमुना के प्रवाह को ऊपर उछाला और यमुना स्त्री वेष धारण कर बलराम के चरणों पर गिरी । **कलिन्दकन्या**—यमुना, कलिन्द नामक पर्वत

से निकलकर बहने वाली यमुना नदी । पौराणिक मान्यता है कि विवस्वान् सूर्य की पत्नी संज्ञा से यम तथा यमुना का जन्म हुआ था । मार्कण्डेय पुराण के अनुसार सूर्य ने प्रसन्न होकर यम को पितरों का अधिपति तथा यमुना को कालिन्द पर्वत मे बहने वाली पवित्र नदी बना दिया—'पितॄणामाधिपत्येन च परितुष्टो दिवाकरः । यमुनां यो नदीं चक्रे कलिन्दान्तरवाहिनीम् ॥' 'सुरगज··· ···उपजनयन्तः' यहाँ भ्रान्तिमान् अलङ्कार है। 'दिवस··· उपपादयन्त.' यहाँ 'अनुलिप्तमिव' में क्रियोत्प्रेक्षा अलङ्कार है । 'विडम्बयन्तः' यहाँ भी क्रियोत्प्रेक्षा है। 'शैवल··· प्रसारयन्तः' यहाँ 'अम्बरमेव सरः' में निरङ्गकेवलरूपक तथा प्रसारयन्त इव में क्रियोत्प्रेक्षा। दोनो का अङ्गाङ्गिभाव सङ्कर। अवली--माला । 'कदलीदलैरिव' यहाँ उपमालङ्कार है । आशा—दिशा । 'आरचयन्त इव' में क्रियोत्प्रेक्षा । 'सेन्द्रायुधमिव' में गुणोत्प्रेक्षा । इन्द्रायुध—इन्द्रधनुष, 'इन्द्रायुधं शक्रधनुः' इत्यमरः । शावक—पक्षी । कलम—एक प्रकार का धान जिसका चावल सुगन्धयुक्त तथा बारीक होता है। शार्दूल—व्याघ्र । क्रोड—गोद । क्षपा—रात्रि । 'कृताहाराश्च·····क्षपयन्ति स्म'—यहाँ वात्सल्य रस है ।

एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्त्तमानस्य कथमपि पितुरहमेवैको विधिवशात् सूनुरभवम् । अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत् । अभिमतजायाविनाशदुःखितोऽपि खलु तातः सुतस्नेहादन्तर्निगृह्य पटुप्रसरमपि शोकमेकाकी मत्सम्वर्द्धनपर एवाभवत् । अतिपरिणतवयाश्च कुशचीरानुकारिणीमल्पावशिष्टजीर्णपिच्छजालजर्जराम् अवस्रस्तांसदेशशिथिलाम् अपगतोत्पतनसंस्काराँ पक्षसन्ततिम् उद्वहन् उपारूढकम्पतया सन्तापकारिणीमंगलग्नां जरामिव विधुन्वन् अकठोरशेफालिकाकुसुमनालपिञ्जरेण कलममञ्जरीदलनमसृणितक्षीणोपान्तलेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन परनीडनिप-

तिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणान् आदायादाय तरुमूलनिपतितानि च शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात् प्रतिदिवसमात्मना च मदुपभुक्तशेषम् अकरोदशनम् ।

**हिन्दी-अनुवाद**—पत्नी के साथ एक पुराने कोटर में निवास करते हुए, उतरती (वार्धक्य) अवस्था में पहुँचे हुए (अपने) पिता का यथाकथञ्चित् (अर्थात् बड़ी मनौतियों के बाद) दैवयोग से–एकमात्र ही मैं पुत्र हुआ। उत्पन्न होते हुए मेरे ही अत्यन्त प्रबल प्रसव कष्ट (प्रसूतिव्यथा) से पीड़ित होकर मेरी माँ परलोक चल बसी। मनोऽनुकूल प्रियतमा की मृत्यु से उत्पन्न (रोदनादिरूप) शोक से दुःखी होते हुए भी तातचरण पुत्र प्रेम के कारण तीव्र विस्तार वाले अर्थात् दारुण दुःख को भी भीतर ही भीतर बाँधकर अकेले मेरे पालन-पोषण में ही तल्लीन हुए।

कुशनिर्मित जीर्ण वस्त्र खण्ड का अनुकरण करने वाले, (वार्धक्यवश) अत्यल्प बचे हुए पुराने पिच्छजाल (पूँछों) के कारण विशीर्ण, गलित (झुके हुए) स्कन्धप्रदेश के कारण ढीले अवयव संयोगों वाले तथा उड़ान भरने में असमर्थ पक्ष समूह को धारण करते हुए, कँपकँपी उत्पन्न हो जाने के कारण मानो अंगों में समायी हुई दुःखदायिनी वृद्धावस्था को दूर फेंकते हुए, सुकोमल हारसिंगारडठल के समान पिङ्गलवर्ण –जंगलीधान की लच्छी खण्डित करने के कारण चिकनाई हुई और घिसी हुई उपान्तलेखा (अग्रभाग) वाले तथा क्षत-विक्षत नोंक वाले चञ्चुपुट द्वारा पराये (पक्षियों के) नीडों से नीचे गिरे हुए धान के लच्छों से चावल के दानों को ले-लेकर तथा (अन्यान्य) शुकसमूहों द्वारा खण्डित किये गये फलों के टुकड़ों को बटोर कर, चलने-फिरने में असमर्थ, अत्यन्त परिपक्व अवस्था वाले (पिता जी) मुझको दिया करते थे और मेरे खाने के बाद बचे हुए भोजन को स्वयं प्रतिदिन ग्रहण करते थे।

**संस्कृत-व्याख्या-एकस्मिश्च**=अन्यतमे च, **जीर्णकोटरे**=पुरातनस्कन्धविवरे, **जायया सह**=पत्न्या साकं, **निवसतः**=निवासं कुर्वतः, **पश्चिमे**=अन्तिमे, **वयसि**=अवस्थायां, **वर्तमानस्य**=विद्यमानस्य, **कथमपि**=महता क्लेशेन **पितुः**=

जनकस्य, **विधिवशात्** = दैवयोगात्, **अहमेव** = केवलमहं (वैशम्पायनः), **एकः** = एकाकी, **सूनुः** = पुत्रः, **अभवम्** = अजनिषि, **मम** = वैशम्पायनस्य, **जायमानस्यैव** = उत्पद्यमानस्यैव, **अतिप्रबलया** = अत्यन्ततीव्रया, **प्रसववेदनया** = प्रसूतिपीडया, **अभिभूता** = पीडिता, **मे** = मम, **जननी** = माता, **लोकान्तरं** = परलोकम् **अगमत्** = अगच्छत् **अभिमतजायाविनाशदुःखितोऽपि** = अभिमताया अभीष्टायाः जायायाः पत्न्याः विनाशेन लोकान्तरगमनेन दुःखितोऽपि क्लेशितोऽपि, **खलु** = वस्तुतः, **तातः** = पिता, **सुतस्नेहात्** = पुत्रप्रेम्णः, **पटुप्रसरमपि** = स्पष्टवेगमपि, **शोकं** = क्लेशम्, **अन्तः** = हृदि, **निगृह्य** = निरुध्य, **एकाकी** = एककः, **मत्सम्वर्धनपर एव** = मम परिपोषणतत्पर एव, **अभवत्** = आसीत्, **अतिपरिणतवयाश्च** = अतिपरिणतम् अत्यन्तपरिपक्वम् अतिवृद्धमित्याशयः वयोऽवस्था यस्य स तादृशः, **कुशचीरानुकारिणीं** = कुशः दर्भः चीरं जीर्णवसनखण्डं तदनुकरोति या सा तां तादृशीम् **अल्पावशिष्टजीर्णपिच्छजालजर्जरां** = अल्पं स्तोकम् अवशिष्टम् उर्वरितं यत् जीर्णपिच्छजालं पुरातनवर्हसमुदायः तेन जर्जरां विशीर्णाम् । **अवस्रस्तांसदेशशिथिलां** = अवस्रस्ते गलिते अंसदेशे स्कन्धप्रदेशे शिथिलां प्रशिथिलाम्, **अपगतोत्पतनसंस्कारां** = अपगतो दूरीभूत उत्पतने आकाशविचरणे संस्कारः सामर्थ्यविशेषो यस्याः सा तां तथोक्ताम् एतादृशीं, **पक्षसन्ततिं** = पत्रसमुदायम् **उद्वहन्** = धारयन् सन्, **उपारूढकम्पतया** = उपारूढः आविर्भूतः कम्पः देहसञ्चलनं यत्र सा तादृशी तस्या भावस्तया, **सन्तापकारिणीं** = दुःखकारिणीम् **अङ्गलग्नां** = अङ्गे शरीरे लग्नां विद्यमानां, **जरामिव** = वृद्धावस्थामिव, **विधुन्वन्** = कम्पयन्, **अकठोरशेफालिकाकुसुमनालपिञ्जरेण** = अकठोर मृदुलं यच्छेफालिकाकुसुमं निर्गुण्डीपुष्पं तस्य यनं नाल वृन्तं तद्वत् पिञ्जरेण पिङ्गलवर्णेन, **कमलमञ्जरीदलनमसृणितक्षीणोपान्तलेखेन** = कलमस्य धान्यविशेषस्य या मञ्जर्यः शिखाः तासां दलनेन विदारणेन मसृणिता चिक्कणा क्षीणा क्षयं प्राप्ता च उपान्तलेखा प्रान्तसमीपस्थायिनी रेखा यस्य स तेन तादृशेन तथा **चञ्चुपुटेन** = पञ्चाङ्गुलेन, **स्फुटिताग्रकोटिना** = स्फुटिता क्षयं प्राप्ता अग्रकोटिः अग्रिमप्रदेशो यस्य तेन तादृशेन, **परनीडनिपतिताभ्यः** = परेषाम् अन्येषां शकुनीनां नीडानि कुलायाः तेभ्यः निपतिताः स्रस्ताः ताभ्यः, **शालिवल्लरीभ्यः** = शालीनां

धान्यविशेषाणां वल्लर्यः मञ्जर्यः ताभ्यः, **तण्डुलकणान्**=तण्डुलानां शालीनां कणान बीजानि, **आदायादय**=गृहीत्वा गृहीत्वा, **तरुमूलनिपतितानि**=वृक्षमूल-च्युतानि, **शुककुलावदलितानि**=शुकानां कीराणां कुलेन समूहेन अवदलितानि विदारितानि, **फलशकलानि च**=फलानां सस्यानां शकलानि खण्डानि, **समाहृत्य** =एकीकृत्य, **परिभ्रमितुं**=दूरे सञ्चरितुम्, **अशक्तः**=असमर्थः, **मह्यं**=वैशम्पा-यनाय, **अदात्**=ददौ, **प्रतिदिवसं च**=प्रतिदिनं च, **आत्मना**=स्वयं, **मदुपभुक्त-शेषं**=मया उपभुक्तस्य अशितस्य शेषम् अवशिष्टम्, **अशनं**=भोजनम्, **अकरोत्** =कृतवान् ।

**टिप्पणी**—**जायया सह**—यहाँ 'सहयुक्तेऽप्रधाने' से तृतीया । **पश्चिमे वयसि**—वृद्धावस्था में । '**मम जायमानस्य एव**' यहाँ 'षष्ठी चानादरे' से षष्ठी; मेरे पैदा होते ही । **सूनुः**=पुत्र । **निगृह्य**=रोककर—नि√ग्रह्+क्त्वा√ल्यप् । **पिच्छ**—जालपंखों का समूह । **अवस्रतांशदेश**—ढीले पड़े हुए कन्धे । '**उपारूढ-विधुन्वन्**' यहाँ '**जरामिव**' में उत्प्रेक्षालङ्कार है । **विधुन्वन्**=हिलाकर दूर करते हुए, वि√धु+शतृ । **मसृणित**—चिकनी । **शालि**—साठि के चावल जो कि साठ दिन में पक जाते हैं । सम+आङ्+हृ+क्त्वा—ल्यप्=समाहृत्य । **अशनम्**—अश्+ल्युट्=अशनम् ।

एकदा तु प्रभातसन्ध्यारागलोहिते गगनतलकमलिनीमधुरक्तपक्ष-सम्पुटे वृद्धहंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्र-मसि, परिणतरङ्कुरोमपाण्डुनि व्रजति विशालतामाशाचक्रवाले, गजरुधिर रक्तहरिसटालोहिनीभिः प्रतप्तलाक्षिकतन्तुपाटलाभिरायामिनीभिः अशिशिरकिरणदीधितिभिः पद्मरागशालकासम्मार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे, सन्ध्यामुपासितुमुत्तरा-शावलम्बिनि मानसरस्तीरमिवावतरति सप्तर्षिमण्डले, तटगतविघ-टितशुक्तिसम्पुटविप्रकीर्णमरुणकरप्रेरणाधोगलितमुडुगणमिव मुक्ता-फलनिकरमुद्वहति धवलितपुलिनमुदन्वति पूर्वेतरे ।

**हिन्दी-अनुवाद**—एक बार-जब कि प्रभातकालीन सन्ध्या (रात्रि एवं प्रातः वेला की सन्धि) की लाली से लोहितवर्ण वाले, गगनमण्डलरूपी कमलिनी के (लाल) मधुरस से रँगे हुए पक्षपुटों वाले तथा मन्दाकिनी (गंगा) के तट से द्वितीय जलनिधि (अर्थात् मानसरोवर) के तट पर उतरे हुये वृद्ध कहहंस की भाँति प्रातःकालीन (रात और दिन की) सन्ध्या की लाली से अरुणायमान, कमलिनी सदृश नभोमण्डल के मधुरस (लक्षणया कान्ति) से रञ्जित उभय-पार्श्वों वाला चन्द्रमा आकाशगङ्गा के तट से पश्चिमी सागर तट पर उतर रहा था, जबकि परिणत (परिपक्क) अवस्था वाले रङ्कुमृग की रोमराजि के समान श्वेतपीतदिङ्मण्डल (शनैः-शनैः अन्धकार कटने के कारण) विस्तीर्णता प्राप्त कर रहा था, जबकि (मारे गये) हाथियों के रक्त से अरुणीकृत सिंह के स्कन्धकेसों के समान लोहितवर्ण वाली-दहकी हुई लाख के रेशों की भाँति पाटल (श्वेतरक्त) वर्णवाली, विस्तारयक्त अतएव पद्मराग मणियों की सींकों से निर्मित सम्मार्जनी (झाड़ू) प्रतीत होने वाली, 'अशिशिरकिरण' अर्थात् सूर्य की किरणों से गगनमण्डलरूपी फर्श पर (बिखरे हुए) पुष्पसमूह सरीखे नक्षत्र समूह दूर किये जा रहे थे, जबकि उत्तर दिशा का आश्रय लेने वाले सप्तर्षिगण (नक्षत्रमण्डल विशेष) मानो सन्ध्योपासना (सायन्तन विधि) सम्पन्न करने के लिए मानसरोवर के तट पर अवतीर्ण हो रहे थे, जबकि तटवर्ती प्रदेशों में प्राप्त-चिटकी हुई सीपियों के संपुटों (कटोरों) से छिटके हुए तथा बालुकामय (सागर) तट को शुभ्र बना देने वाले अतएव सूर्य की प्रेरणा से नीचे गिरे हुए तारकसमूह सीरखे प्रतीत होने वाले मुक्ताफलसमूह 'पूर्वेतर' अर्थात् पश्चिमी समुद्र द्वारा धारण किये जा रहे थे।

**संस्कृत व्याख्या–एकदा तु**=एकस्मिन् काले तु प्रत्यूषे जाते मृगया-कोलाहलध्वनिरुदचरदिति दूरेणान्वयः। **प्रभातसन्ध्यारागलोहिते**=प्रभातस्य प्रत्यूषस्य या सन्ध्या तत्सम्बन्धी यो रागो रक्तिमा तेन लोहिते रक्तवर्णे, **गगन-तलकमलिनीमधुरक्त-पक्षसम्पुटे**=गगनलम् आकाशमण्डलमेव कमलिनी नलिनी तस्या मधुना लोहितवर्णपुष्परसेन रक्तम् अनुरञ्जितं पक्षसम्पटं पतत्र-युगलं यस्य तस्मिन्, **वृद्धहंस इव**=पुरातनकलहंस इव; **चन्द्रमसि**=हिमांशौ,

**मन्दाकिनीपुलिनात्**=वियद्गङ्गासैकतात्, **अपरजलनिधितटं**=अपर: पश्चिमो यो जलनिधि: समुद्र: तस्य तट तीरम्, **अवतरति** = उत्तीर्णे सति, **परिणतरङ्कुरोमपाण्डनि**=परिणतस्य पुरातनस्य रङ्को: मृगविशेषस्य रोमाणि लोमानि तद्वत् पाण्डुनि पीतशुभ्रे, **आशाचक्रवाले**=आशानां दिशां चक्रवाल मण्डलं तस्मिन्, **विशालतां**=विस्तृतत्वं, **व्रजति**=प्राप्नुवति सति, **गजरुधिररक्तहरिसटालोहिनीभि:**=गजानां हस्तिनां यद्रुधिरं शोणितं तेन रक्ता: लोहिता: या: हरिसटा: तद्वत् लोहिनीभि: रक्तवर्णाभि:, **प्रतप्तलाक्षिकतन्तुपाटलाभि:**=प्रतप्ता: उष्णीकृता: ये लाक्षिका: जतुसम्बन्धिन: तन्तव: सूत्राणि तद्वत् पाटलाभि:, **आयामिनीभि:**=विस्तारवर्ताभि:, **अशिशिरकिरण-दीधितिभि:**=अशिशिरा: उष्णा: किरणा: रश्मय: यस्य तस्य सूर्यस्य दीधितिभि: कान्तिभि: रश्मिभिर्वा, **पद्मरागशलाकासम्मार्जनीभिरिव**=पद्मरागा: लोहितकमणय: तेषां या: शलाका: इषीका: ताभि: संमार्जनीभिरिव शोधनीभिरिव, **गगनकुट्टिमकुसुमप्रकरे**=गगनम् आकाशमेव कुट्टिम् बद्धभूमि: तस्य कुसुमप्रकर: पुष्पसमुदाय: तस्मिन्, **तारागणे**=नक्षत्रमण्डले, **समुत्सार्यमाणे**=दूरीक्रियमाणे सति, **उत्तराशावलम्बिनि**=उत्तराशा उदीची दिक् तदवलम्बिनि तदवस्थिते, **सप्तर्षिमण्डले**=मरीच्यादि-सप्तदेवर्षिसमूहे, **सन्ध्यां**=प्रात: सन्ध्याम्, **उपासितुं**=विधातुमिव, **मानससरस्तीरं**=मानसरोवरतटम्, **अवतरति**=अवरोहति सति, **पूर्वेतरे**=पूर्वात् पूर्वसमुद्रात् इतर: अन्य: पश्चिम: तस्मिन्, **उदन्वति**=समुद्रे, **तटगतविघटितशुक्तिसम्पुटविप्रकीर्णं**=तटगतानि तीरस्थितानि विघटितानि स्फुटितानि यानि शुक्तिसम्पुटानि समुद्रमण्डूकपुटानि तेभ्य: विप्रकीर्ण विपर्यस्त, **धवलितपुलिनं**=धवलितं श्वेतीकृतं पुलिनं सैकतं येन तं तथोक्तम्, **अरुणकरप्रेरणाधोगलितं**=अरुणस्य सूर्यस्य करा: किरणा: तेषां प्रेरणया नोदनया अधोगलित भूमिपतितम्, **उडुगणमिव**=नक्षत्रमण्डलमिव, **मुक्ताफलनिकरं**=मौक्तिकसमूहम्, **उद्वहति**=धारणं कुर्वति सति ।

टिप्पणी-प्रभातसन्ध्या—प्रात:कालीन सन्धिवेला । सन्ध्यायें तीन हैं—प्रात:सन्ध्या, मध्याह्नसन्ध्या तथा सायंसन्ध्या । 'वृद्धहंस इव' यहाँ उपमालङ्कार

है । **पुलिन**—किसी नदी आदि का वह बालुकामय प्रदेश जहाँ शीघ्र ही में जल उतरने से अभी गीलापन विद्यमान हो। **परिणतरङ्कु**-वृद्ध रङ्कु मृग जिसकी पीठ पर सफेद चित्तियाँ होती हैं । **पाण्डु**–पीला तथा सफेद, 'पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः' इति शब्दार्णवः । **आशाचक्रवाल**–दिशाओं का मण्डल, 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' 'चक्रवालं तु मण्डलम्' इति चामरः । **'परिणत······चक्रवाले'** में 'लुप्तोपमालङ्कार है। **गजरुधिर······लोहिनीभिः'**–यहाँ 'रुधिररक्त' में पुनरुक्त-वदाभास अलङ्कार है । **'हरितसटावत्**– में लुप्तोपमालकार । इन दोनों का अङ्गाङ्गिभाव सङ्कर । **लाक्षिकतन्तुपाटला**–यहाँ लुप्तोपमा है। **आयामिनी**—विस्तृत, लम्बी । **सम्मार्जनी**—गृहशोधिनी, झाड़ू । 'सम्मार्जनी शोधिनी स्यात्' इत्यमरः। **'सम्मार्जनीभिरिव'**—में जात्युत्प्रेक्षा है। **'गगन तारागणे'** यहाँ परम्परितरूपकालंकार है। **सप्तर्षिमण्डल**—मरीचि आदि सात नक्षत्र सप्तर्षिमण्डल के नाम से अभिहित है। कहा भी गया है—'मरीचिरङ्गिरां अत्रि पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः' ।। **उदन्वति**—सागर में, उदक=मतुप् उदक को उदनादेश । **'उडुगणमिव'**—में जात्युत्प्रेक्षालंकार है ।

तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेसरिणि करिणीकदम्बकप्रबोध्यमानसमदकरिणि क्षपाजलजडकेसरकुसुमनिकरमुदयगिरिशिखरस्थितं सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने, रासभरोमधूसरासु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु, अवश्यायशीकरिणि लुलितकमलवने रतिखिन्नशबरसीमन्तिनीस्वेदजलकणापहारिणि वनमहिषरोमन्थफेनबिन्दुवाहिनि चलितपल्लवलतालास्योपदेशव्यसनिनि विघटमानकमलषण्डमधुशीकरासारवर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजातजडिम्नि

मन्दमन्दसञ्चारिणि प्रवाति प्राभातिके मातरिश्वनि ।

**हिन्दी-अनुवाद**—जबकि ओसकणों की वर्षा से युक्त–जगे हुये मयूरों वाले जँभाई लेते हुए सिंहों से संकुल हथिनियों के दल द्वारा जगाये जाते हुए मदोत्कट गजों वाले कानन द्वारा मानों उदयाचलचूडचुम्बी (भगवान्) सूर्य को लक्ष्य बनाकर पल्लवरूपी (प्रणाम) अञ्जलियों से तुषारपात के कारण स्तम्भित (जमे हुए) परागवाला पुष्पसमूह समर्पित किया जा रहा था, जबकि गर्दभ-लोम की भाँति धूम्रवर्ण (धौरेरंग) वाली वनदेवियों के प्रासाद (राजभवन) स्वरूप वृक्षों के शिखरों पर कपोतमाला के समान आचरण करने वाली तथा (फहराती हुई) धर्मध्वजाओं के समान तपोवन में होने वाले अग्निहोत्रों की धूमावलियाँ ऊपर उठ रही थीं, जबकि बर्फीली जलकणिकाओं वाला कमलवन को प्रकम्पित कर देने वाला–रतिक्रीडा से थकी हुई भीलवधुओं की (आभास-जनित) स्वेदजलबिन्दुओं का अपहरण करने वाला–जंगली भैंसों के रोमन्थन (चर्वितचर्वण अथवा पागुर) से उत्पन्न फेन की बिन्दुओं को वहन करने वाला–चञ्चल किसलयों वाली लताओं के नृत्य-शिक्षण (दान) रूपी व्यसनवाला–प्रस्फुटित होते हुए कमकवनों के मधुरस–फुहारों की वेगमयी वर्षा करनेवाला–पुष्पों की सुरभि से मधुकर गणों को सन्तप्त कर देनेवाला तथा रात्रि की समाप्ति से उत्पन्न (अर्थात् प्रातःकालीन) जड़तावाला अतएव शनैः-शनैः सञ्चरण करने वाला प्रत्यूषकालीन पवन प्रवर्तित हो रहा था।

**संस्कृत-व्याख्या–तुषारबिन्दुवर्षिणि**=तुषारस्य तुहिनस्य बिन्दवः कणाः तान् वर्षति पातयतीति तस्मिन् तथोक्ते, **विबुद्धशिखिकुले**=विबुद्धानि जापरि-तानि शिखिकुलानि मयूरकुटुम्बानि मयूरगणाः व यत्र तस्मिन् तथोक्ते, **विजृम्भ-माणकेसरिणि**=विजृम्भमाणाः जृम्भाविधायिनः केसरिणः सिंहाः यत्र तस्मिन् तादृशे, **करिणीकदम्बकप्रबोध्यमानसमदकरिणि**=करिणानां हस्तिनीनां कदम्बकं समूहः तेन प्रबोध्यमानाः जागरणं कुर्वाणाः समदाः दानजलस्यन्दिनः करिणो गजाः यस्मिन् तस्मिन् तादृशे, **कानने**=वने, **क्षपाजलजडकेशरं**=क्षपायाः रात्रेः जलेन सलिलेन जडाः स्तिमिताः केशराः किञ्जल्काः यस्य तं तथोक्तं, **कुसुम-**

**निकरं**=पुष्पसमूहम्, **उदयगिरिशिखरस्थितं**=उदयगिरिःउदयाचलः तस्य शिखरे शृंगे स्थितं विद्यमानं, **सवितारं**=सूर्यम्, **उद्दिश्येव** =उद्देश्यं कृत्वेव, **पल्लवाञ्जलिभिः**=पल्लवानि किसलयानि एव अञ्जलयः तैः, **समुत्सृजति**=समर्पयति सति, **रासभरोमधूसरासु**=रासभस्य गर्दभस्य रोमाणि लोमानि तद्वत् धूसराम् धूम्ररूपासु, **वनदेवताप्रासादानां**=वनदेवतानाम्, अरण्याधिष्ठात्रीणां प्रासादाः भवनानि तेषां भवनरूपणां तरूणां-वृक्षाणां, **शिखरेषु**=शृङ्गेषु, **पारावतमालायमानासु**=परावतानां कपोतानां माला पङ्क्तिः तद्वत् आचरन्तीषु तथोक्तासु, **तपोवनाग्निहोत्रधूमलेखासु**=तपोवनेषु मुन्याश्रमेषु यानि अग्निहोत्राणि अग्निहोत्रहोमाः तेषां धूमलेखासु धूमपंक्तिषु, **धर्मपताकास्विव**=धर्मोद्घोषणाय वैजयन्तीष्विव, **समुन्मिषन्तीषु** =समुत्सर्पन्तीषु, **अवश्यायशीकरिणि**=अवश्यायः तुषारः तस्य शीकराः अम्बुकणाः ते अस्य सन्तीति तस्मिन् तथोक्ते, **लुलितकमलवने** =लुलितम् आन्दोलितं कमलवनं पद्मवनं येन तस्मिन् यथोक्ते, **रतिखिन्नशबरसीमन्तिनीस्वेदजलकणापहारिणि**=रतिखिन्नानां निधुवनश्रान्तानां शबरसीमन्तिनीनां किरातवधूनां यत् स्वेदजलं धर्मवारि तस्य कणाः बिन्दवः तेषाम् अपहारिणि नाशविधायिनि तस्मिन् तादृशे, **वनमहिषरोमन्थफेनबिन्दुवाहिनि**= वनमहिषाणां काननसैरिभणां रोमन्थः चर्वितचर्वणं तत्र ये फेनबिन्दवः फेनकणाः तान् वहति धारयतीति तस्मिन् तथोक्ते, **चलितपल्लवलतालास्योपदेशव्यसनिनि** =चलितानाम् आन्दोलितानां पल्लवानां किसलयानां लतानां वल्लीनाञ्च यत् लास्यं चाञ्चल्यरूपं नृत्यं तस्य उपदेशे शिक्षणे व्यसनम्, तत्र आसक्तिरस्यास्तीति तस्मिन् तथोक्ते, **विघटमानकमलषण्डमधुशीकरासारवर्षिणी**=विघटमानानि विकाशं प्राप्यमाणानि यानि कमलषण्डानि पद्मवनानि पेषां मधु पुष्परसः तस्य शीकराणां बिन्दूनाम् आसारं धारासम्पातं वर्षति क्षिपति इति तस्मिन् तथोक्ते, **कुसुमामोदतर्पितालिजाले**=कुसुमानां पुष्पाणाम् आमोदः सौरभः तेन तर्पितं प्राणितम् अलिजालं भ्रमरसमूहः येन तस्मिन् तथोक्ते, **निशावसानजातजडिम्नि** =निशावसाने रात्रिशेषे जातः उत्पन्नः जडिमा जाड्यं यस्य तस्मिन् तथोक्ते, **मन्दमन्दसञ्चारिणि**=शनैः-शनैः प्रवहति, **प्राभातिके** = प्रातःकालिके, **मातरिश्वनि**=वायौ, **प्रवाति**=प्रवहति सति ।

**टिप्पणी**—तुषार—तुहिन, 'तुषारस्तुहिनं हिमम्' इत्यमरः । 'सवितारमिवोद्दिश्य' में क्रियोत्प्रेक्षालकार है । 'पल्लवाञ्जलयः' में निरङ्गकेवलरूपक है । इनके अतिरिक्त समासोक्ति भी है । इनका परस्पर अङ्गाङ्गिभाव संकर है । पारावत-कबूतर । 'रासभ............धूमलेखासु' यहाँ रासभरोमधूसरासु में लुप्तोपमा, पारावतमालायमानासु में वयङ्गतोपमा तथा धर्मपताकासु में जाति स्वरूपोत्प्रेक्षा । इनका परस्पर अङ्गाङ्गिभाव संकर । अवश्याय—तुषार 'अवश्यायस्तु नोहारस्तुषारस्तुहिनं हिमम्' इत्यमरः । आसार—धाराऱूप में वर्षा 'धारासम्पात आसारः' इत्यमरः । मातरिश्वा—वायु 'मातरिश्वा सदागतिः' इत्यमरः ।

...कमलवनप्रबोधमङ्गलपाठकानामिभगण्डडिण्डिमानां मधुलिहां कुमुदोदरेषु घनघटमानदलपुटनिरुद्धपक्षसंहतीनामुच्चरत्सु हुङ्कारेषु, प्रभातशिशिरवाय्वाहृतमुत्तप्तजतुरसाश्लिष्टपक्ष्ममालमिव सशेषनिद्राजिह्मतारं चक्षुरुन्मीलयत्सु शनैः शनैरूषरशय्याधूसरक्रोडरोमराजिषु वनमृगेषु, इतस्ततः संचरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणि पम्पासरः कलहंसकोलाहले समुल्लसति नर्तितशिखण्डिमण्डले मनोहरे वनगजकर्णतालशब्दे, क्रमेण च गगनतलमवतरतो दिवसकरवारणस्यावचूडचामरकलाप इवोपलक्ष्यमाणं मञ्जिष्ठारागलोहिते किरणजाले, शनैः शनैरुदिते भगवति सवितरि, पम्पासरः पर्यन्ततरुशिखरसंचारिण्याध्यासितगिरिशिखरे दिवसकरजन्मनि हततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे, स्पष्टे जाते प्रत्युषसि, नचिरादिव दिवसाष्टमभागभाजि स्पष्टभासि भास्वतिभूते, प्रयातेषु यथाभिमतानि दिगन्तराणि शुककुलेषु, कुलायनिलीननिभृतशुकशावकसनाथेऽपि निःशब्दतया शून्य इव तस्मिन् वनस्पतौ, स्वनीडावस्थित एव ताते, मयि च शैशवादसंजातबलसमुद्भिद्यमानपक्षपुटे पितुः समीपवर्तिनि कोटरगते... ।

**हिन्दी-अनुवाद**—जबकि कमलकाननों को जगाने के लिए मंगलपाठ (स्वस्त्ययन) करने वाले हाथियों के गण्डस्थल रूपी डिण्डिम (नगाडों) वाले तथा कुमुदपुष्पों के भीतर सघनरूप से अर्थात् कसकर बन्द हुए दलपटों

(पत्रसमूहों) में अवरुद्ध पक्षसमूहों वाले भ्रमरों की हुंकारें (भनभनाहटें) प्रकट हो रही थीं, जबकि ऊसर (तृणरहित) भूमि पर शयन करने के कारण धूम्रवर्णी वक्षःस्थल की रोमावलियों वाले वनमृग प्रातःकालीन शीतल पवन से पीड़ित-दहकी हुयी लाख के रस से चिकपी हुई नेत्र की रोमपंक्तियों (बरौनियों) वाली प्रतीत होती हुई तथा उखड़ी हुई नींद के कारण ऊपर चढ़ी हुई पुतलियों वाली आँख को धीरे-धीरे खोल रहे थे, जबकि अरण्यचारी (जीव-जन्तु) इधर-उधर सञ्चरण कर रहे थे, जबकि श्रवणसुखद पम्पासरोवर में रहने वाले कलहंसमण्डल का कोलाहल फैल रहा था, जबकि मयूरपक्षियों के समूह को नर्तनप्रवृत्त बनाने वाली मनोहर—जंगली हाथियों के कानों का 'करतल ध्वनि' जैसा शब्द उठ रहा था, जबकि क्रमशः आकाश-मण्डल में (ऊपर) चढ़ते हुए सूर्य रूपी गजराज के मंजीठी के रंग की तरह लाल अधोमुख कूर्चको (चूड़ा) वाले चामर-समूह की भाँति मंजीठी के रंग की तरह लाल रंगवाली किरणों का जाल दृष्टिगोचर हो रहा था, जबकि भगवान् सूर्य धीरे-धीरे उदित हो चले थे, जबकि पम्पासरोवर की चौहद्दियों पर विद्यमान वृक्षों के शिखरों पर सञ्चरण करने वाले (ऋष्यमूक) गिरि-शिखर का आश्रय लेने वाले (बड़े भाई बालि की पत्नी) तारा का अपहरण करने वाले तथा बालि से हारकर) पुनः बन की ओर पलायन करने वाले सूर्यजन्मा वानरराज सुग्रीव का भाँति पम्पासरोवर की चौहद्दियों पर विद्यमान वृक्षों के शिखरों पर सञ्चरण करने वाला, (उदय) गिरि-शिखर का आश्रय लेने वाला, सूर्य से उत्पन्न होने वाला, तारक मण्डल अपहरण (विनाश) करने वाला, अभिनव आलोक (प्रकाश) पुनः वन को व्याप्त कर रहा था, जबकि प्रत्यूष (प्रभातवेला) स्पष्ट हो चुका था, जबकि थोड़ी देर में दिन के आठवें भाग अर्थात् आधे पहर का भागी बनकर सूर्य स्पष्ट प्रकाश वाला हो चुका था, जबकि शुक (पक्षियों के) समूह मनचाहे दिग्विभागों में (भोजनार्थ) प्रस्थान कर चुके थे, जबकि घोसलों में छिपे बैठे—चुप्पी साधे हुए शुकशावकों से संकुल होने पर भी वह सेमर का पेड़ (अकेला होने के कारण बच्चों की) निरशब्दता के कारण सुनसान प्रतीत हो रहा था, जबकि पिताजी अपने नीड में ही विद्यमान थे, जबकि उगते हुए पक्ष समूहवाला (किन्तु) बाल्यावस्था के कारण असमर्थ मैं पिता जी के ही निकटवर्ती कोटर में चला गया था ।

**संस्कृत-व्याख्या**—**कमलवनप्रबोधमङ्गलपाठकानाम्**=कमलानां नलिनानां वनं विपिनं तस्य प्रबोधे जागरणे विकसने वा मङ्गलपाठकाः प्रशस्तिवाचकाः तेषाम्, **इभगण्डडिण्डिमानाम्**=इभानां हस्तिनां गण्डः यः कपोलभागः सः एव डिण्डिमः पटहः येषां तेषाम्, **कुमुदोदरेषु**=कुमुदानां कैरवाणाम् उदरेषु मध्येषु, **विघटमानदलपुटनिरुद्धपक्षसंहतीनाम्**=विघटमानानि संकुचन्ति यानि दलपुटानि पत्रसंपुटानि तेषु निरुद्धा अवरुद्धा पक्षसंहतिः छदसमूहः येषां तेषाम्, **मधुलिहाम्**=मधु पुष्परसं लिहन्ति स्वदन्ते इति मधुलिहः मधुकराः तेषाम्, **हुंकारेषु**=क्रोधवशात् हुंकृतिषु, **उच्चरत्सु**=उत्सर्पत्सु सत्सु, **ऊषरशय्याधूसरक्रोडरोमराजिषु**=ऊषरा अतृणा या शय्या शयनस्थलो तस्य धूसरा धूम्रवर्णा क्रोडस्य उदरस्य रोम्णां लोम्नां राजिः पङ्क्तिः येषां तेषु, **वनमृगेषु**=वनानां विपिनानां मृगेषु हरिणेषु, **शनैः शनैः**=मन्दं मन्दम्, **प्रभातशिशिरवाय्वाहतम्**=प्रभातस्य प्रातः कालस्य यः शिशिरः शीतलः वायुः पवनः तेन आहतम् पीडितम्, **उत्तप्तजतुरसाश्लिष्टपक्ष्ममालम् इव**=उत्तप्तस्य उष्णीकृतस्य जतुनः लाक्षायाः रसः द्रवः तेन आश्लिष्टा लिप्ता पक्ष्मणां नेत्ररोम्णां माला पंक्तिः यस्य तद् इव, **सशेषनिद्राजिह्मतारम्**=सशेषा अवशिष्टा या निद्रा स्वापः तया जिह्मा वक्रा तारा कनीनिका यस्य तत्, **चक्षुः**=नेत्रम्, **उन्मीलयत्सु**=उद्‌घाटयत्सु सत्सु, **वनचरेषु**=वनेषु विपिनेषु चरन्ति विहरन्तीति तेषु वनजीवेषु, **इतस्ततः**=चतुर्दिक्षु, **संचरत्सु**=विहरत्सु, **श्रोत्रहारिणि**=श्रोत्रं कर्णं हरति आकर्षतीति तच्छीलं तस्मिन् आकर्षके, **पम्पासरःकलहंसकोलाहले**=पम्पासरसः पम्पाभिधानस्य सरोवरस्य ये कलहंसाः कादम्बाः तेषां कोलाहलः कलकलः तस्मिन्, **विजृम्भमाणे**=विवर्धमाने सति, **नर्तितशिखण्डिमण्डले**=नर्तितं नृत्यं प्रापितं (उल्लासितम्) शिखण्डिनां मयूराणां मण्डलं समूहः येन तस्मिन् । **मनोहरे**=चित्ताकर्षके, **वनगजकर्णतालशब्दे**=वनगजानां जङ्गलहस्तिनां कर्णतालस्य कर्णः ताल इव तस्य अथवा कर्णयोः तालः ध्वनिविशेषः गीतवाद्यपादन्यासानां कालक्रिययोः नियमहेतुः यस्य शब्दः निनादः तस्मिन्, **समुल्लसति**=प्रसरति सति, **क्रमेण च**=क्रमशः च, **गगनतलम्**=आकाशतलम्, **अवतरतः**=अवरोहतः, **दिवसकरवारणस्य**=दिवसकरः सूर्यः स एव वारणः हस्ती तस्य, **अवचूडचामरकलापे इव**=अवगता अधोगता चूडा शिखा यस्य तादृशः चामरकलापः

चमरीरोमगुच्छकं तस्मिन् इव, उपलक्ष्यमाणे = विलोक्यमाने, **किरणजाले** = किरणानां रश्मीनां जालं समूहः तस्मिन्, **मञ्जिष्ठारागलोहिते** = मञ्जिष्ठा ओषधिविशेषः तस्या रागः रक्तिमा तेन लोहिते तद्वद् वा लोहिते रक्तवर्णे जाते सति, **भगवति** = ऐश्वर्यशालिनि, **सवितरि** = भास्करे, **शनैः-शनैः** = मन्दं मन्दम्, **उदिते** = उदयं प्राप्ते सति, **पम्पासरःपर्यन्ततरुशिखरसंचारिणि** = पम्पासरसः तन्नाम्नो जलाशयस्य पर्यन्ततरवः प्रान्तवृक्षाः तेषां शिखरेषु शृङ्गेषु संचरतीति तच्छीलः तस्मिन्, **अध्यासितगिरिशिखरे** = अध्यासितं पूर्वम् आश्रितं गिरेः उदयाचलस्य किष्किन्धस्य च शिखरं शृङ्गं येन तस्मिन्, **दिवसकरजन्मनि** = दिवसकरः भास्करः तस्मात् उत्पत्तिः यस्य तस्मिन्, **हृततारे** = हृताः अस्तंगमिताः ताराः नक्षत्राणि येन तस्मिन्, सुग्रीवपक्षे हृताः गृहीता तारा बालिपत्नी येन तस्मिन्, **बालातपे** = बालः प्रभातकालिक आतपः सूर्यप्रकाशः तस्मिन्, **कपीश्वरे इव** = कपीनां वानराणाम् ईश्वरः स्वामी सुग्रीवः तस्मिन् इव, **पुनः** = भूयः, **गगन** = काननम्, **अभिपतति** = अभिगच्छति सति, **प्रत्यूषसि** = प्रातःकाले, स्पष्टे जाते = व्यक्ते भूते, **नचिरादिव** = क्षणानन्तरमिव, **भास्वति** = सूर्ये, **दिवसाष्टमभागभाजि** = दिवसस्य अहोरात्रस्य अष्टमः प्रहरात्मकः भागः अंशः तं भजति आश्रयति इति तस्मिन्, **भूते** = जाते सति, **शुककुलेषु** = कीरवृन्देषु, **यथाभिमतानि** = यथेप्सितानि, **दिगन्तराणि** = दिशाम् आशानाम् अन्तराणि मध्यानि दिग्विभागान् इत्याशयः, **प्रयातेषु** = प्रस्थितेषु, **तस्मिन्** = पूर्वोक्ते, **वनस्पतौ** = शाल्मलीवृक्षे, **कुलायनिलीननिभृतशुकशावकसनाथेऽपि** = कुलायेषु नीडेषु निलीनाः निविष्टाः निभृताः शान्ताः शुकशावकाः कीरशिशवः तैः सनाथेऽपि अलङ्कृतेऽपि, **निःशब्दतया** = निर्गतः शब्दः कोलाहलः यस्मात् स निःशब्दः तस्य भावः तत्ता: तया नीरवतया, **शून्ये इव** = प्राणिरहिते इव, **ताते** = मम जनके, **स्वनीडावस्थिते एव** = स्वस्य आत्मनः नीडे कुलाये एव अवस्थिते विनिष्टे सति, **शैशवात्** = बाल्यात्, **असंजातबलसमुद्भिद्यमानपुटे** = असंजातम् अनुत्पन्नं बलम् उत्पतनशक्तिः यस्य तादृशं समुद्भिद्यमानं प्रस्फुटत् पक्षपुटं पतत्रयुगलं यस्य तस्मिन्, **मयि** = वैशम्पायने च, **पितुः** = जनकस्य, **समीपवर्तिनि** = समीपं वर्तते इति तच्छीलः तस्मिन् निकटवर्तिनि, **कोटरगते** = वृक्षस्कन्धविवरस्थिते ।

टिप्पणी—इभगण्डडिण्डिमानाम्=हाथियों के गण्डस्थल को नगाड़ा समझकर उन पर चोंच लगाने वाले नक्कारचियों की भाँति गुंजार करने वाले। विघटमान—संकुचित होते हुए; वि+घट्+शानच्। सशेषनिद्रा-जिह्मतारम्—निद्रा न पूरी होने के कारण तिरछी पुतलियों वाला नेत्र, नींद पूरी न होने पर अलसाई हुई आँखें बाँकी पुतलियों से देखा करती हैं। विजृम्भमाणे—शनैः-शनैः उभरने लगा, जागने लगा। दिवसकरजन्मनि—दिनकर से जन्म लेने वाले आतप तथा सुग्रीव, रामायण के अनुसार सुग्रीव सूर्य का पुत्र था। योगध्यान में मग्न सुमेरुपर्वत पर स्थित भगवान् ब्रह्मा के नेत्रों से एक बार अकस्मात् अश्रुपात हुआ उससे एक सुन्दर वानरी उत्पन्न हुयी। उसी के द्वारा सूर्यदेव का औरस पुत्र सुग्रीव तथा इन्द्रदेव का औरस पुत्र बाली हुआ। प्रत्युषसि—उषाकाल, दिन का आरम्भकाल (प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि, अमरकोष) सूर्योदय से पूर्व की छः घड़ियों का नामकरण इस प्रकार है—'पञ्चपञ्च' उषः कालः षट्पञ्चारुणोदयः। सप्तपञ्च प्रभातः स्यात् शेषे सूर्योदयः स्मृतः' ॥ दिवसाष्टमभाग—दिन का आठवाँ भाग जिसे प्रहर कहते है। इसमें तीन घण्टे या ७॥ घड़ी होती है। यहाँ पहले ६० घड़ी के अहोरात्र के अन्तिम भाग को आठवाँ भाग कहा गया है। इसी में सूर्योदय की ३ घड़ियाँ भी आ जाती हैं। असंजात········पक्षपुटे—मेरे (वैशम्पायन) के पंख अभी फूट रहे थे, उनमें उड़ने की शक्ति नहीं आ पाई थी। समुद्भिद्यमान—सम+उद्+शानच्। 'इभगण्डडिण्डिम' यहाँ निरङ्गकेवलरूपकालङ्कार। तालशब्दे में उपमालङ्कार तथा 'शून्य इव' में क्रियोत्प्रेक्षालङ्कार है।

सहसैव तस्मिन् महावने संत्रासितसकलवनेचरः सरभससमुत्पतत्पतत्रिपक्षपुटशब्दसंततः भीतकरिपोतचीत्कारपीवरः प्रचलितमत्तालिकुलक्वणितमांसलः परिभ्रमदुद्घोणवनवराहरवघर्घरो गिरिगुहासुप्तप्रबुद्धसिंहनिनादोपबृंहितः, कम्पयन्निव तरून् भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत्। आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम्।

**हिन्दी-अनुवाद**–(कि तभी) अचानक ही उस महावन में–समस्त वनचरों को भयभीत कर देने वाली, वेगपूर्वक उड़ते हुये पक्षियों के पक्ष-समूह से विस्तीर्ण (फैलायी गई), डरे हुए गजशावकों की चीत्कार से परिपुष्ट, (भयवश) उड़े हुए मदमत्त भ्रमर समुदाय की 'भनभनाहट' से भरी पूरी, इधर-उधर सञ्चारण करते हुए ऊँचे थूथनों (नासिकाओं) वाले वनैले सूकरों की 'घरघराहट' से कठोर, पर्वत की गुफा में सोये (तथा बाद में) उठे वनकेसरी की दहाड़ से बढ़ी हुई, वृक्षों को कँपाती हु -सी, (महाराज) भगीरथ द्वारा (भूलोक पर) उतारी जाती हुई भगवती गङ्गा के धाराकोलाहल की भाँति प्रचुर (कोलाहल वाली) तथा डरी हुई वनदेवियों द्वारा सुनी गई—मृगया कोलाहल की ध्वनि फूट पड़ी।

पहले कभी न सुनी गई उस (भयावह) ध्वनि को सुनकर, उत्पन्न हुई कँपकँपी वाला, बच्चा होने के कारण (उस प्रकार का कोलाहल सुनकर ही) बधिरीभूत कर्णकुहरों वाला भयविह्वल मैं प्रतिकार बुद्धि अर्थात् भय से छुटकारा पाने के विचार से समीपवर्ती पिता जी की वृद्धावस्था के कारण ढीले-ढाले पंखों के भीतर घुस गया।

**संस्कृत-व्याख्या**–**तस्मिन्** = पूर्वोक्ते, **महावने** = महारण्ये, **सहसा एव** = अकस्मात् एव, **संत्रासितसकलवनेचरः** = संत्रासिताः भयं प्रापिता सकलाः संपूर्णाः वनेचराः काननचारिणो जीवाः येन सः, **सरभससमुत्पतत्पतत्रिपक्षपुटशब्दसंततः** = रभसेन सह सरभसं संवेगं समुत्पतन्तः उड्डीयमानाः पतत्रिणः खगाः तेषां पक्षपुटानि पतत्रसंपुटानि तेषां शब्दः ध्वनिः तेन, **संततः** = अधिकं विस्तृतः, **भीतकरिपोतचीत्कारपीवरः** = भीताः त्रस्ताः ये करिपोतः गजशावकाः तेषां चीत्कारेण व्यथाशब्देन पीवरः संपुष्टः, **प्रचलितलताकुलमत्तालिकुलक्वणितमांसल** = प्रचलिताः आन्दोलिताः लताः वल्लर्यः तासु अकुलाः उद्विग्नाः मत्ताः क्षीबाः अलयः मधुपाः तेषां कुलं समूहः तस्य क्वणितेन गुञ्जितेन मांसलः पुष्टः, **परिभ्रमदुद्घोणवनवराहरवघर्घरः** = परिभ्रमन्तः परिभ्रमणं कुर्वन्तः उद्घोणाः उद्गता घोणाः येषां ते उच्चनासिकाः वनवराहाः विपिनसूकराः तेषां रवेण शब्देन घर्घरः कठोरः, **गिरिगुहासुप्तप्रबुद्धसिंहनिनादोपबृंहितः** = गिरीणां पर्वतानां गुहाः कन्दराः तासु सुप्ताः शयिताः पश्चाच्च प्रबुद्धाः जागरिताः सिंहा मृगेन्द्राः तेषां

निनादेन ध्वनिना उपबृंहितः वृद्धि प्राप्तः, तरून्=पादपान् कम्पयन् इव=आन्दोलयन् इव, भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहुलः=भगीरथेन सगरवंशजेन राज्ञा अवतार्यमाणा अवरोह्यमाणा या गङ्गा जाह्नवी तस्याः प्रवाहः स्रोतः तस्य कलकलः प्रवाहध्वनिः तद्वत् बहलः बहुलीभूतः अनेकध्वनिमिश्रणादिति भावः, भीतवनदेवताकर्णितः=भीताः त्रस्ता वनदेवताः अरण्याधिष्ठात्रीदेव्यः ताभिः आकर्णितः श्रुतः, मृगयाकोलाहलध्वनिः=मृगया आखेटः तस्याः कोलाहलः कल्लोलः तस्य ध्वनिः स एव वा ध्वनिः शब्दः, उदचरत्=उदतिष्ठत्, अहं च तम्=पूर्वोक्तम्, अश्रुतपूर्वम्=पूर्वं श्रुतं श्रुतपूर्वम् न श्रुतपूर्वम् अश्रुतपूर्वम् नवीनं शब्दम्, आकर्ण्य=श्रुत्वा, उपजातवेपथुः=उपजातः उत्पन्नः वेपथुः कम्पनं यस्य सः, अर्भकतया=शिशुत्वेन, जर्जरितकर्णविवरः=जर्जरिते विदीर्णे कर्णयोः श्रोत्रयोः विवरे छिद्रे यस्य सः, भयविह्वलः=भयेन भीत्या विह्वलः व्याकुलः, प्रतीकारबुद्ध्या=प्रतीकारः रक्षणोपायः तस्य बुद्ध्या विचारेण, समीपवर्तिनः=निकटस्थितस्य, पितुः=तातस्य, जराशिथिलपक्षपुटान्तरम्=जरया परिणतवयसा शिथिलं श्लथम् अदृढं पक्षपुटं पतत्रसंपुटं तस्य अन्तरम् अभ्यन्तरम्, अविशम्=प्रविष्टोऽभवम् ।

टिप्पणी—महच्च तद्वनं चेति महावनं तस्मिन्=महावने । पतत्री–पक्षी, पतन्तं त्रायते इति पत्रम् पक्षः तद् अस्य अस्तीति पतत्री । करिपोत—हाथी का बच्चा । उद्घोण–ऊपर को थूथ किये हुए जंगली सूअर । घोणा–नासिका 'क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका' (अमरकोष) । भगीरथ······बहुलः—भगीरथ के द्वारा लायी हुई गङ्गा के प्रवाह की कलकल ध्वनि के तुल्य सघन पुञ्जीभूत ध्वनि । पौराणिक मान्यता है कि कपिलमुनि के शाप से दग्ध सगर के साठ हजार पुत्रों के मोक्ष के लिए राजा भगीरथ गङ्गा जी को ब्रह्मलोक से पृथ्वीलोक पर लाये थे । आते समय गङ्गा के प्रवाह की भयंकर कलकल ध्वनि से मृगया के भयकारी कोलाहल की तुलना की गई है । प्रतीकारबुद्ध्या--रक्षा की भावना से, (प्रति √ कृञ् + घञ्) । 'कम्पयन्निव तरून्' में क्रियोत्प्रेक्षालङ्कार है । अविशम्–विश् धातु लङ् उ० पु० ए० व० ।

अनन्तरं च सरभसमितो गजयूथपतिलुलितकमलिनीपरिमलः, इतः क्रोडकुलदश्यमानभद्रमुस्तारसामोदः, इतः करिकलभभज्यमान-

सल्लकीकषायगन्धः, इतो निपतितशुष्कपत्रमर्मरध्वनिः इतो वनमहिषविषाणकोटिकुलिशभिद्यमानवाल्मीकधूलिः, इतो मृगकदम्बकम्, इति वनगजकुलम्, इतो वनवराहयूथम्, इतो वनमहिषवृन्दम्, इतः शिखण्डिमण्डलविरुतम्, इतः कपिञ्जलकुलकलकूजितम्, इतः कुररकुलक्वणितम्, इतो मृगपतिनखभिद्यमानकुञ्जररसितम्, इयमार्द्रपङ्कमलिना वराहपद्धतिः, इयमभिनवशष्पकवलरसश्यामला हरिणरोमन्थफेनसंहतिः इयमुन्मदगन्धगजगण्डकण्डूयनपरिमलनिलीमुखरमधुकरविरुतिः, एषा निपतितरुधिरबिन्दुसिक्तशुष्कपत्रपाटला रुरुपदवी, एतद् द्विरदचरणमृदितविटपपल्लवपटलम्, एतत् खड्गिकुलक्रीडितम, एष नखकोटिविलिखितविकटपत्रलेखो रुधिरपाटलः करिमौक्तिकदलदन्तुरो मृगपतिमार्गः, एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी भूमिः, इयमटवीवेणिकानुसारिणी पक्षचरस्य यूथपतेर्मदजलमलिना संचारवीथी,..... ।

**हिन्दी-अनुवाद**—इसके अनन्तर मैंने शिकार में डूबे हुए, वृक्षों की सघनता के कारण अदृश्य शरीरों वाले विशाल जनसम्भर्द कानन को संक्षुब्ध कर देने वाला कोलाहल सुना, जो (लोग) कि यहाँ गजराज द्वारा विदलित कमलिनी की महक आ रही है, इधर सूकर-समूह द्वारा चबाए जाते हुए नागरमोथे के रस की गन्ध है, इस ओर करिशावकों द्वारा आमर्दित की जाती हुई सल्लकी की कसैली वास है, इस स्थान पर गिरे हुए सूखे पत्तों की 'मर्मराहट' है, यहाँ जंगली भैंसों के शृंगाग्रभाग रूपी वज्र से छिन्न-भिन्न की गई (दीमक की) बांबियों की धूल है, इधर हरिणों का झुण्ड है, इधर जंगली हाथियों का जत्था है, यहाँ बनैले सुअरों की टोली है, यहाँ बनैले भैंसों का समूह है, इस ओर मयूर मण्डली की 'पिहकन' (बोली) है; इस ओर सफेद तीतरों के दल का मधुर कूजन है, इस ओर टिटहरियों के समूह का कलरव है, यहाँ वन केसरी के नखों से विदीर्ण किये जाते हुए कुम्भमण्डल वाले हाथियों की चिग्घाड़ है, यह गीले कीचड़ से मैला बनाया गया वनसूकरों का मार्ग है, यह अचिरोत्पन्न नरम घास के कौरों के रस

से सँवराया हुआ हरिणों के रोममन्थन (पागुर) से उत्पन्न फेन-समूह है, यह मदोन्मत्त गन्धगजों के गण्डस्थल खुजलाने से उत्पन्न सुरभि में आसक्त वाचाल भ्रमरों की 'भनभनाहट' है, यह गिरे हुए रक्त बिन्दुओं से सींचे गये सूखे पत्र-समूह के कारण श्वेत-रक्त बनी हुई रुरु मृगों की सरणि है, यह हाथियों के पैरो से विदलित किये गये तरुपल्लवों का ढेर है; यह गैंडों के समूह द्वारा खेला गया (स्थान) है, यह नखराग्रभाग से चित्रित भयावह पत्राकार चिह्नों (छापों) वाला रक्त के कारण पाटलवर्णी तथा (मारे गये) हाथियों के मुक्तासमूह से उच्चावच वना हुआ मृगपति-सिंह का मार्ग है, यह अभी-अभी व्यायी हुई वनमृगी के गर्भ-रक्त से लाल रंगवाली जमीन है, यह दल से बिछुड़े हुये यूथपति-गजराज के मदजल से मलिन बनी हुई तथा वनस्थली की वेणी का अनुकरण करने वाली अर्थात् उच्चावच (उस गजराज की) सञ्चरणवीथी है।

**संस्कृत व्याख्या—अनन्तरम्** = पितुः पक्षपुटान्तरप्रवेशानन्तरम्, **च** = पूर्व-समुच्चयार्थकोऽयम् । अत्र लोकसमूहस्य कोलाहलमश्रृणवमिति दूरतरेण संबंधः। **सरभसम्** = सवेगम्, **इतः** = अस्मात् स्थानात्, **गजयूथपतिलुलितकमलिनीपरि-मलः** = गजानां हस्तिनां यूथस्य समूहस्य पतिः स्वामी तेन लुलिताः मर्दिताः कमलिन्यः नलिन्यः तासां परिमलः गन्धः, **इतः** = अस्मात् प्रदेशात्, **क्रोडकुलदश्य-मानभद्रमुस्तारसामोदः** = क्रोडानां वराहाणां कुलेन समूहेन दश्यमानाः भक्ष्य-माणाः भद्रमुस्ताः गुन्द्राः घासविशेषाः तासां रसस्य द्रवस्य आमोदः गन्धः, इतः **करिकलभभज्यमानसल्लकीकषायगन्धः** = करिणां हस्तिनां शलभाः शावकाः तैः भज्यमानाः मर्द्यमानाः सल्लक्यः गजप्रियाः घासविशेषाः तासां कषायः तूवरः गन्धः आमोदः, इतः **निपतितशुष्कपत्रमर्मरध्वनिः** = निपतितानि पतितानि शुष्क-पत्राणि नीरसपर्णानि तेषां मर्मरध्वनिः मर्मरध्वानः, इतः **वनमहिषविषाणकोटि-कुलिशभिद्यमानवल्मीकिधूलिः** = वनमहिषाः विपिनसैरिभाः तेषां विषाणयोः श्रृंगयोः कोटिः अग्रभागः सा एव कुलिशं भिदुरं तेन भिद्यमानानि विदार्यमाणानि वल्मीकानि मृत्तिकास्तूपाः तेषां धूलिः रेणुः, इतः **मृगकदम्बकम्** = मृगाणां हरि-णानां कदम्ब एव कदम्बकम् समूहः इतः **वनगजकुलम्** = वनगजानां विपिन-हस्तिनां कुलं समूहः, इतः **वनवराहयूथम्** = वनवराहाणां जङ्गलसूकराणां यूथं कादम्बकम्, **इतः वनमहिषवृन्दम्** = वनमहिषाणां जङ्गलसैरिभाणां वृन्दं कदम्बकं,

**इतः शिखण्डिमण्डलविरुतम्** = शिखण्डिनां मयूराणां, **मण्डलम्** = समूहः तस्य विरुतं केका, इतः **कपिञ्जलकुलकलकूजितम्** = कपिञ्जलानां गौरतित्तिराणां कुलं समूहः तस्य कलं सुमधुरं कूजितं स्वनितम्, **इतः कुररकुलक्वणितम्** = कुर-राणां मत्स्यनाशनानां कुलस्य समूहस्य क्वणितं रणनम् ,इतः **मृगपतिनखभिद्य-मानकुम्भकुञ्जररसितम्** = मृगपतिः सिंहः तस्य नखाः करजाः तैः भिद्यमानः विदार्यमाणः कुम्भः शिरस्थमांसपिण्डः येषां ते कुञ्जराः हस्तिनः तेषां रसितं चीत्कारः, **इयम्** = एषा पुरो दृश्यमाना, **आर्द्रपङ्कमलिना** = आर्द्रः क्लिन्नः पङ्कः कर्दमः तेन मलिना मलीमसा, **वराहपद्धतिः** = वराहाणां वनसूकराणां पद्धतिः मार्गः, **इयम् अभिनवशष्पकवलरसश्यामला** = अभिनवानि नवीनानि शष्पाणि वालतृणानि तेषां कवलाः ग्रासाः तेषां रसेन निर्यासेन श्यामला हरितवर्णा, **हरिणरोमन्थफेनसंहतिः** = हरिणानां मृगाणां रोमन्थः चर्वितस्य आकृष्य चर्वणं तेन तस्य वा फेनाः कफाः तेषां संहितः संघातः, **इयम्** = एषा प्रत्यक्षश्रूयमाणा, **उन्मदगन्धगजगण्डकण्डूयनपरिमलनिलीनमुखरमधुकरविरुतिः** = उन्मदाः मदो-त्कटाः गन्धगजाः मत्तमतङ्गजाः तेषां गण्डः कटः तस्य कण्डूयनं खर्जनं तेन यः परिमलः मदगन्धः तत्रनिलीनाः निविष्टाः मुखराः वाचालाः मधुकराःमधुपाः तेषां विरुतिः गुञ्जनम्, **एषा** = इयं पुरो दृश्यमाना, **निपतितरुधिरबिन्दुसिक्तशुष्क-पत्रपाटला** = निपतिताः पतिताः रुधिरबिन्दवः शोणितपृषताः तैः सिक्तानि आर्द्री-कृतानि यानि शुष्कपत्राणि नीरसपर्णानि तैः पाटला श्वेतरक्ता, **रुरुपदवी** = रुरुमृगमार्गः,**एतद्** = इदं पुरतः स्थितम्, **द्विरदचरणमृदितविटपपल्लवपटलम्** = द्वौ रदो दन्तौ येषां ते द्विरदाः करिणः तेषां चरणाः पादाः तैः मृदितानि लुलि-तानि विटपानां वृक्षशाखानां पल्लवानि किसलयानि तेषां पटलं समूहः, **एतत्** = इदं दृश्यमानम्, **खड्गिकुलक्रीडितम्** = खड्गिनां गण्डकानां, कुलस्य = समूहस्य क्रीडितं निह्नुनम्, **एषः** = अयं दृश्यमानः, **नखकोटिविलिखितविकटपत्रलेखः** = नखानां पुनर्भवानां कोट्यः अग्रभागाः ताभिः विलिखिताः चित्रिताः विकटाः भय-ङ्कराः पत्रलेखाः पत्ररचनाः यत्र सः, **रुधिरपाटलः** = रुधिरेण शोणितेन पाटलः श्वेतरक्तः, **करिमौक्तिकदलदन्तुरः** = करीणां गजानां मौक्तिकानि मुक्ताफलानि तेषां दलानि खण्डानि तैः दन्तुरः उन्नतावनतः, **मृगपतिमार्गः** = सिंहसञ्चरण-पथः **एषा** = पुरोदृश्यमाना, **प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी** = प्रत्यग्रप्रसूता

नूतनप्रसूतवती या वनमृगी विपिनहरिणी तस्य: गर्भ: भ्रूण: तस्य रुधिरं शोणितं तेन लोहिनी रक्ता, **भूमिः**=पृथ्वी, **इयम् अटवीवेणिकानुसारिणी**=अटवी अरण्यानी तस्या: वेणिका ग्रथितचूडा ताम अनुसरति अनुकरोतीति तच्छीला, **पक्षचरस्य**=पक्षेण निजमण्डलेन सह चरति विहरति इति पक्षचर: मण्डलचारी तस्य, **यूथपतेः**=यूथस्य मण्डस्य पति: स्वामी तस्य गजेन्द्रस्य, **मदजलमलिना**=मदजलेन दानवारिणा मलिना कृष्णवर्णा, **संचारवीथी**=संचारस्य वीथी—संचारवीथी=विहरणमार्ग: ।

**टिप्पणी—गजयूथपतिः**—हाथियों, का यूथपति । यूथ शब्द पशु-पक्षियों के समूह के लिए प्रयुक्त होता है । (सजातीयै: कुलं यूथं तिरश्चां पुन्नपुंसकम्, अमरकोप) । **लुलित**—मसली हुई, झुलसी हुई । **परिमल**—गन्ध, किसी वस्तु के मसलने से उत्पन्न गन्ध का नाम परिमल है । (विमर्दोत्थे परिमलो गन्धे जनमनोहरे) । आमोद: सोऽतिनिर्हारी ...... ।। (अमरकोष) वह गन्ध अत्यन्त आकर्षक होने पर आमोद कही जाती है । **मुस्ता**—नागरमोथा, **कपिञ्जल**—चातकपक्षी:, 'कपिञ्जल: चातकपक्षी' इति शब्दकल्पद्रुम: । **कलभ**-हाथी का बच्चा (कलभ: करिशावक:, अमरकोप) । **खड्गकुलक्रीडितम्**—गैंडों के समूह के खेलने का स्थान, यहाँ क्रीडित शब्द मे अधिकरण अर्थ में क्त प्रत्यय हुआ है । **दन्तुर**—ऊंचा-नीचा । **प्रत्यग्रप्रसूता**—नयी जच्चा, तुरन्त व्यायी हुई । **वेणिका**—वेणी, गुथी हुयी चोटी । **पक्षचर**—मण्डल के साथ विचरण करने वाला सरदार । **सञ्चारवीथी**—गमनमार्ग । **वनमहिष**........ **धूलिः**—यहाँ लुप्तोपमा तथा रूपक का सन्देहसङ्कर है ।

चमरीपङ्क्तिरियमनुगम्यताम्, उच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम् आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्द:, गृह्यतां धनु:, अवहितै: स्थीयताम् विमुच्यतां श्वान इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमश्रृणवम् ।

**हिन्दी-अनुवाद**—चमरी गायों की इस टोली का पीछा करो, मृगों की सूखी मेंगनियों की रज से भरी गयी इस वनस्थली पर शीघ्र ही पड़ाव डाल दो, पेड़ों की चोटी पर चढ़ जाओ, इस दिशा की ओर देखो,

'यह शब्द सुनो, धनुष ले लो, सावधान हो जाओ, कुत्ते छोड़ दो, इस प्रकार आपस मे कहते हुए मृगया में आसक्त और वृक्षों के झुरमुट मे शरीर को छिपाये हुए महान् जनसमूह का वन मे खलबली मचा देने वाला कोलाहल मैंने सुना।

**संस्कृत-व्याख्या—इयम्** =प्रत्यक्षोपलक्ष्यमाणा, **चमरीपङ्क्तिः** =चमर्याख्य मृगराजिः, **अनुगम्यताम्**—अनुव्रज्यताम्। **इयं**—पुरो दृश्यमाना, **उच्छुष्कमृगकरीषपांसुला** =उच्छुष्का: अत्यन्तनीरसा: मृगकरीषा: हरिणपुरीषा: तैः पांसुला सधूलीका, **वनस्थली** =काननभूमि:, **त्वरिततरम्** =शीघ्रतरं, **अध्यास्यताम्** =अवलम्ब्यतां, **तरुशिखरम्** =तरूणां पादपानां शिखरं श्रृङ्गम्, **आरुह्यताम्** =आरोहणविषयीक्रियतां, **इयं दिक्** =एषा काष्ठा, **आलोक्यताम्** =विलोक्यतां, **अयं शब्दः** =ध्वनिः, **आकर्ण्यताम्** =श्रूयतां **धनुः** =चापः, **गृह्यताम्** =आदीयतां, **अवहितैः** =सावधानैः **स्थीयताम्** =अवस्थीयतां उपविश्यतां वा, **श्वानः** =कौलेयकाः, **विमुच्यन्ताम्** =विसृज्यन्तां, **इति** =एवं विधम्, **अन्योन्यम्** =परस्परम्, **अभिवदतः** =संलपतः, **मृगयासक्तस्य** =मृगया आखेटः तत्र सक्तस्य संलग्नस्य, **तरुगहनान्तरितविग्रहस्य** =तरूणां वृक्षाणां गहन निकुञ्जः तेन अन्तरिताः आच्छादिताः विग्रहाः शरीराणि यस्य तस्य, **महतः** =विशालस्य, **जनसमूहस्य** =जनानां लोकानां समूहः तस्य आखेटिकमण्डलस्य, **क्षोभितकाननम्** =क्षोभितं संचालितं काननं वनं येन तम्, **कोलाहलम्** =कलकलम्, **अश्रृणवम्** =अश्रौषम्।

**टिप्पणी—चमरी** =मृगविशेष, इसकी पूँछ के बालों से चामर बनाया जाता है। **अवहितैः**—सावधान [अव—धा+क्त, धा को हि आदेश]। **विग्रह**—शरीर। **अभिवदतः**—अभि+वद्+शतृ; ष० ए० व०।

अथ नातिचिरादेवानुलेपनार्द्रमृदङ्गध्वनिधीरेण गिरिविवरविजृम्भितप्रतिनिनादगम्भीरेण शबरशरताडितानां केसरिणां निनादेन, संत्रस्तयूथमुक्तानामेकाकिनां च संचरतामनवरतकरास्फोटमिश्रेण जलधररसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन सरभससारमेयविलुप्यमानावयवानामालोलकातरतरलतरतारकाणामेणकानां च करुणकूजितेन, निहितयूथपतीनां वियोगिनीनामनुगतकलभानां च स्थित्वा-

स्थित्वा समाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन, कतिपयदिवसप्रसूतानां च खड्गिधेनुकानां त्रासपरिभ्रष्टपोतकान्वेषिणीनामुन्मुक्तकंठमारसन्तीनां क्रन्दितेन, तरुशिखरसमुत्पतितानामाकुलाकुलचारिणां च पत्ररथानां कोलाहलेन,………।

**हिन्दी-अनुवाद**—इसके अनन्तर थोड़ी ही देर मे—(पिसान आदि का) अनुलेपन के कारण गीले मृदङ्ग की ध्वनि के समान गम्भीर, पर्वत-कन्दराओं में फैली हुई प्रतिध्वनियों के कारण मन्द्रता को प्राप्त हुई, किरातों के बाणों से व्यथित किये गये वनकेशरियों की दहाड़ से,संत्रस्त जत्थे से बिछुड़े हुए अकेले पड़े हुए—भागदौड़ करते हुए गजराजों के अनवरत शुण्डाघात से सचलित तथा मेघगर्जन का अनुकरण करने वाले कण्ठ गर्जन (चिग्घाड) से तीव्रगामी (शिकारी) कुत्तों द्वारा नोचे जाते हुए अंग-प्रत्यङ्गों वाले अतएव चञ्चल, कातर एवं अतिशय तरल (अश्रुपूर्ण) पुतलियों वाले हरिणों के करुण शब्द से, मारे गये (अपने स्वामिभूत) यूथपतियों वाली—बिछोहभरी—पीछे-पीछे चलते हुए कलभों (करिशावकों) से मुक्त—रुक—रुक कर (पूर्वोक्त) कोलाहल को सुनकर उठे हुए (उनरे हुए) कर्णपल्लवों वाली—चारो ओर परिभ्रमण करती हुई हथनियों की तात्कालिक पतिविनाश से उत्पन्न शोक के कारण दीर्घ बनी हुई चीत्कार से, कुछ ही पहले की व्यायी हुई संत्रास ( भय ) के कारण खोये हुए (स्तनन्धय) शावकों को खोजती हुई गैंडियों के उन्मुक्तकण्ठ (गलाफाड़) आक्रन्दन से, वृक्षों के शिखर से उड़े हुए तथा अत्यन्त व्याकुल होकर चलने वाले विहगों के कलकल शब्द से।

**संस्कृत-व्याख्या**—**अथ** = कोलाहलश्रवणानन्तरम्, **नातिचिरात् एव** = स्वल्पसमयेनैव,**शबरशरताडितानाम्** = शबराःकिराताः तेषां शराः बाणा तैः ताडिताः पीडिताः तेषाम्, **केसरिणाम्** = सिंहानाम् **अनुलेपनार्द्रमृदङ्गध्वनिधीरेण** = अनुलेपनं द्रवद्रव्यलेपनं तेन आर्द्रःस्विन्नः मृदङ्गः मुरजः तस्य ध्वनिः ध्वानः तद्वत् धीरेण गम्भीरेण,**गिरिविवरविजृम्भितप्रतिनिनादगम्भीरेण** = गिरिविवरेषु पर्वत कन्दरासु विजृम्भितः प्रसृतः प्रतिनिनादः प्रतिध्वनिः तेन हेतुना गम्भीरेण सान्द्रेण, **निनादेन** = हुंकारेण, **संत्रस्तयूथमुक्तानाम्** = संत्रस्तं भयभीतं यूथं

मंडलं तस्मात् मुक्तानां पृथग्भूतानाम्, **एकाकिनाम्**=यूथरहितानाम्, **संचरतां**=परिभ्रमताम्, **गजयूथपतीनां**=गजानां यूथपतयः तेषां हस्तिपक्षचरा–णाम्, **अनवरतकरास्फोटमिश्रेण**=अनवरतं निरन्तर यः करास्फोटः शुण्डाप्रहारः तेन मिश्रेण संमिलितेन, **जलधररसितानुकारिणा**=जलधराः मेघाः तेषां रसितं गर्जनम् अनुकरोति सादृश्यं भजते इति तच्छीलः तेन, **कण्ठगर्जितेन**=कण्ठस्य गलस्य गर्जितं गर्जनं तेन, **सरभससारमेयविलुप्यमानावयवानाम्**=सरभसं सवेगं सारमेयैः कुक्कुरैः विलुप्यमानाः दश्यमानाः अवयवाः अङ्गानि येषां तेषाम्, **आलोलकातरतरलतरतारकाणां**=आलोला चञ्चलाः कातराः दीनाः तरल-तराः अश्रुव्याप्ततराः ताराः कनीनिकाः येषां तेषां, **एणकानाम**=मृगाणाम् **करुणाकूजितेन**=करुणोत्पादकक्रन्दनेन, **निहतयूथपतीनां**=निहिताः मृताः यूथपतयः पक्षस्वामिनः यासां तासां, **वियोगिनीनां**=पतिवियोगिनीनाम्, **अनुगतकलभानां**=अनुगताः अनुसृताः कलभाः करिपोताः यासां तासाम्, **स्थित्वास्थित्वा**=भूयो भूयो विरम्य, **कलकलं**=कोलाहलम्, **समाकर्ण्य**=सम्यक् श्रुत्वा, **उत्कर्णपल्लवानां**=उद् ऊर्ध्वीकृताः कर्णपल्लवाः श्रोत्रकिसल–यानि याभिः तासाम्, **इतस्ततः**=चतुर्दिक्षु, **परिभ्रमन्तीनां**=संचरन्तीनाम्, **करिणीनां**=हस्तिनीनां, **प्रत्यग्रपतिविनाशशोकदीर्घेण**=प्रत्यग्रः अभिनवः पतिविनाशः स्वामिमृत्युः तस्य शोकः करुणा तेन दीर्घेण विस्तृतेन, **चीत्कृतेन**=चीत्कारेण, **कतिपयदिवसप्रसूतानाम्**=कतिपये केचित् दिवसाः दिनानि तदा प्रसूताः कृतप्रसवाः तासाम्, **त्रासपरिभ्रष्टपोतकान्वेषिणीनाम्**=त्रासेन भयेन परिभ्रष्टाः यूथच्युताःपोतकाः अर्भकाः तान् अन्वेषयन्ति मार्गयन्ति इति तच्छीलाः तासाम्, **उन्मुक्तकण्ठं**=उन्मुक्तः कण्ठः यस्मिन् कर्मणि तत्, उन्मुक्तकण्ठं यथा स्यात् तथा अनिरुद्धगलं, तारस्वरेणेत्याशयः, **आरसन्तीनाम्**=आरटन्तीनां, **खड्गधेनुकानाम्**=खड्गिनः गण्डकाः तेषां धेनुकाः स्त्रियः तासा, **आक्रन्दि–तेन**=रोदनशब्देन, **तरुशिखरसमुत्पतितानाम्**=तरुणां वृक्षाणां शिखराणि शृंगाणि तेभ्यः समुत्पतिताम् उड्डीनाम्, **आकुलाकुलचारिणाम्**=आकुला-कुलं यथा स्यात् यथा चरन्तीति तच्छीलाः आकुलाकुलचारिणः अतिव्याकुलतया भ्रमणशीलाः तेषाम्, **पत्ररथानाम**=पक्षिणाम्, **कोलाहलेन**=कलकलध्वनिना ।

**टिप्पणी–अनुलेपनार्द्रमृदङ्ग**–मृदङ्ग या ढोल की ध्वनि को तीव्र करने के लिए उसके मुँह पर एक विशेष प्रकार का लेप किया जाता है–"मृदङ्गो मुखलेपेन करोति मधुरध्वनिम्" । ताजे लेप के कारण गीला मृदङ्ग और भी अधिक गम्भीर ध्वनि करता है । **करास्फोट**–सूँड फटकारना, हाथी पुन: पुन: सूँड मुख में देकर फिर झटके से बाहर फेंककर अपनी पीड़ा का प्राकट्य किया करते हैं । यहाँ वे अपने यूथ से बिछुड़ जाने के कारण करास्फोट द्वारा अपनी छटपटाहट प्रकट कर रहे है । **सारमेय**–कुत्ते, कश्यप प्रजापति की पत्नी सरमा की सन्तान होने से इन्हें सारमेय कहा जाता है । **खड्गिधेनुका**–गैंडों की मादायें, यद्यपि 'करिणी धेनुका वशा' तथा 'धेनुका तु करेण्वां च' अमरकोष के कथनानुसार केवल हथिनी को तथा चकारात् नवप्रसूता गौ को धेनुका कहा जाता है तथापि 'धयति लेढि नवजातं शिशुम् इति धेनु:, 'नवजात शिशु को चाटने वाली' इस सामान्य अर्थ में प्रत्येक जाति की नवप्रसूता मादा को धेनु या धेनुका शब्द के द्वारा व्यवहार मे बोला जाने लगा है–'खड्गिधेनु:, वडवधेनु:, ऐसे ही प्रयोग हैं । **पोतक**–शिशु । **पत्ररथ**–पक्षी, **'जलधर···गर्जितेन'** में लुप्तोपमालङ्कार है । **'सरभससारमेय'**–में वृत्त्यनुप्रास अलंकार है ।

रूपानुसारप्रधावितानां च मृगयूणां युगपदतिरभसपादपाताभिहतायाः भुवः कम्पमिव जनयता चरणशब्देन, कर्णान्ताकृष्टज्यानां च मदकलकुररकामिनीकण्ठकूजितकलशबलितेन शरनिकरवर्षिणां धनुषां निदानेन, पवनाहतिक्वणितधाराणामसीनां च कठिनमहिषस्कन्धपीठपातिनां रणितेन, शुना च सरभसविमुक्तघर्घरध्वनीनां वनान्तरव्यापिना ध्वानेन सर्वतः प्रचलितमिव तदरण्यमभवत् ।

**हिन्दी-अनुवाद**–वन्य पशुओं को (वधार्थ) अनुगमन हेतु वेगपूर्वक दौड़े हुए शिकारियों के एक ही साथ अतिशय वेग पूर्वक (किये गये) पादविक्षेप से प्रताड़ित की गई पृथ्वी की मानों कँपकँपी उत्पन्न कर देने वाले चरणों के शब्द से, कानों के छोर तक खींची हुई डोरियों वाले तथा मद के कारण मनोज्ञभूत

कुररी (टिटहिरी) के मधुर कूजन के समान रसपगी शरसमूह की वर्षा करने वाले धनुषों की 'सनसनाहट' से, पवन के आघातवश शब्दायमान धारवाली तथा कठोर वनमहिष के स्कन्ध प्रदेश पर गिरने वाली तलवारों के शब्द से तथा वेगपूर्वक घर्घरध्वनि (गुर्राहट) उत्पन्न करने वाले (शिकारी) कुत्तों के वनान्तरव्यापी ध्वनि (शब्द) से वह वन डाँवाडोल-सा हो उठा।

**संस्कृत-व्याख्या—रूपानुसारप्रधावितानां**=रूपा: मृगा: तेषाम् अनुसारेण गगनक्रमेण प्रधावितानां चलितानाम्, **मृगयूणां**=मृगयन्ते पशून् इति मृगयव: किराता: तेषाम्, **युगपत्**=एकस्मिन् समये, **अतिरभसपादपातभिहतायाः**= अतिरभसेन अत्यन्तवेगेन य: पादपात: चरणविक्षेप: तेन अभिहता प्रताडिता यस्या:, **भुवः**=पृथिव्या:, **कम्पमिव**=वेपथुम् इव, **जनयता**=उत्पादयता, **चरणशब्देन**=पादध्वनिना, **कर्णान्ताकृष्टज्यानां**=कर्णान्तं श्रोत्रपर्यन्तम् आकृष्टा आहिता ज्या मौर्वी येषां तेषाम्, **शरनिकरवर्षिणां**=शराणाम् इषूणां निकर: समूह: तं वर्षन्ति मुञ्चन्ति इति तच्छीला: तेषाम्, **धनुषां**= चापानाम्, **मदकलकुरकामिनीकण्ठकूजितकलशबलितेन**=मदेन उन्मादेन कला: सुमनोहरा: या: कुररकामिन्य: मत्स्यनाशनसुन्दर्य: तासां कण्ठकूजितं गलकूजनं तस्य कल: मधुरध्वनि: तेन शवलित: मिश्रित: तेन, **निनादेन**=ध्वनिना, **पवनाहतिक्वणितधाराणां**=पवनस्य वायो: आहति: आघात: तया क्वणिता शब्दिता धारा तीक्ष्णाग्रभाग: यासां तासाम्, **कठिनमहिषस्कन्धपीठपातिनां**= कठिन: कठोर: महिषाणां सैरिभाणां स्कन्ध: बाहुशिर: स एव पीठं स्थलं तत्र पतन्तीति तच्छीला: तेषाम् **असीनां**=खडगानाम् **रणितेन**=शब्दितेन, **सरभसविमुक्तघर्घरध्वनीनां**=सरभसं सवेगं विमुक्ता नि:सारिता: (विहिता इत्यर्थ:) घर्घरध्वनय: घर-घरध्वाना: यै: तेषाम्, **शुनां**=सारमेयाणां, **वनान्तरव्यापिना**=यद् वन वनान्तरं अपरकाननं तद्व्याप्नोति इति तच्छील: काननान्तरप्रसारी तेन, **ध्वानेन**=शब्देन, **च**=समुच्चयार्थकमिदं अव्ययपदं **तद्**=पूर्वोक्तम्, **अरण्यं**=काननं, **सर्वतः**=समन्तात्, **प्रचलितम् इव**= कम्पितम् इव, **अभवत्**=अभूत।

**टिप्पणी—रूपानुसार**—वन्य पशुओं अर्थात् हरिणों की गति के अनुसार,

जिस ओर पशु गये थे उसी दिशा में। 'रूप स्वभावे सौंदर्यें नामगे पशु-शब्दयोः' (मेदिनीकोष) **मृगयु**–शिकारी पशुओं को ढूँढ़-ढूँढ कर मारने वाला। **शबलित**–मिश्रित, मिला हुआ। मदकल······यहाँ **लुप्तोपमा** अलंकार है। **'प्रचलितमिव' में क्रियोत्प्रेक्षालंकार है**।

अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले निर्वृष्टमूकजलधर-वृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव स्तिमि-ततामुपगते कानने, मन्दीभूतभयोऽहमुपजातकुतूहलः पितुरुत्सङ्गा-दीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य संत्रास तरल-तारकः शैशवात् किमिदमित्युपजातदिदृक्षस्तामेव दिशं चक्षुः प्राहिणवम्।

**हिन्दी-अनुवाद**–थोड़ी ही देर में उस मृगया-कोलाहल के शान्त हो जाने पर तथा भली-भाँति बरस चुके हुए अतएव निश्शब्द मेघमण्डल का अनुकरण करने वाले एवं मन्थन की समाप्तिवश प्रशान्त जल वाले सागर की भाँति वन के सुस्थिर हो जाने पर, मन्द पड़े हुये भय वाले तथा आश्चर्य से अभिभूत मैंने पिता जी की गोदी से थोड़ा-सा ही उचक कर कोटर में ही बैठे-बैठे गर्दन बढ़ाकर, भय के कारण चंचल पुतलियों वाला होकर लड़कपन के कारण "यह क्या है ?" इस उत्कण्ठावश उत्पन्न हुई देखने की आकांक्षा से युक्त होकर, उसी दिशा की ओर आँखें फेरी।

**संस्कृत व्याख्या**–**अचिरात् च**=शीघ्रमेव च, **तस्मिन्**=पूर्वोक्ते, **मृगया-कलकले**=मृगया आखेटः तस्य कलकलः कोलाहलः तस्मिन्, **प्रशान्ते**=पूर्ण-रूपेण शान्ति प्राप्ते सति, **निर्वृष्टमूकजलवृन्दानुकारिणि**=निर्वृष्टाःपूर्णतः कृतवर्षा अतएव मूकाः शान्ताः जलधाराः मेघाःतेषां वृन्दं समूहः तम् अनुकरोति सादृश्यं भजते इति तच्छीलं तस्मिन् वर्षान्ते शान्तमेघमण्डलसदृशे, **मथनावसा-नोपशान्तवारिणि**=मथनं सुधार्थं बिलोडनं तस्य अवसानं समाप्तिः तस्मिन् उपशान्तं प्रकृतावस्थं वारि सलिलं यस्य तस्मिन्, **सागरे इव**=समुद्रे इव, **कानने**=विपिने, **स्तिमिताम्**=निश्चलताम्, **उपगते**=प्राप्ते सति, **अहम्**=

वैशम्पायनः, **मन्दीभूतभयः**=अमन्दं मन्दं भूतम् इति मन्दीभूतः न्यूनीभूतं भयंदरः तस्य तादृशः अतएव **उपजातकुतूहलः**=उपजातम् उत्पन्नं कुतूहलं कौतुकम्, **पितुः**=जनकस्य, **उत्सङ्गात्**=क्रोडात् **ईषदिव**=अल्पमिव, **निष्क्रम्य**=उन्नमय्य, **कोटरस्थ एव**=स्कन्धविवरस्थित एव, **शिरोधराम्**=ग्रीवाम्, **प्रसार्य**= विस्तार्य, **संत्रासतरलतारकः**=संत्रासः भयं तेन तरले अश्रुव्याप्ते चञ्चले वा तारके कनीनिके यस्य तादृशः, **शैशवात्**=बाल्यात्, **इदम्**=अनुभूयमानम्, **किम्**=किंस्वरूपम्, **इति**=एवम्, **उपजातदिदृक्षः**=उपजाता समुत्पन्नो दिदृक्षा दर्शनेच्छा यस्य तादृशः **ताम् एव**=घटनाचक्राश्रयभूताम् एव, **दिशम्**=आशाम्, **चक्षुः**=नेत्रम्, **प्राहिणवम्**=अपातयम् ।

**टिप्पणी-निर्वृष्ट**=पूर्णरूप से बरस चुकने वाला निर्+वृष्+क्त= निवृष्ट। **मथना·····सागरे**=मन्थन के पश्चात् शान्त जल वाला समुद्र। पौराणिक परम्परा के अनुसार विष्णु की आज्ञा से देवों ने दैत्यों से सन्धि करके अमृत प्राप्ति के लिये क्षीरसागर का मन्थन किया था। उसमें से चौदह रत्न निकले थे। **स्तिमितता**=निश्चलता, स्तब्धता शान्तिः।-स्तिम्+क्त, तल प्रत्यय। **तरलतारक**=चञ्चल पुतलियों वाला। **दिदृक्षा**=देखने की इच्छा (द्रष्टुम् इच्छा दिदृक्षा)-दृश्+सन्, टाप्। यहाँ **उपमा** तथा **लुप्तोपमा** की निरपेक्ष स्थिति होने से **संसृष्टि** है।

अभिमुखमापतच्च तस्माद् वनान्तरादर्जुनभुजदण्डसहस्रविप्रकीर्णमिव नर्मदाप्रवाहम्, अनिलचलितमिव तमालकाननम्, एकीभूतमिव कालरात्रीणां यामसंघातम्, अञ्जनशिलास्तम्भसंभारमिव क्षितिकम्पविघूर्णितम्, अन्धकारपूरमिव रविकिरणाकुलितम्, अन्तकपरिवारमिव परिभ्रमन्तम्, अवदारितरसातलोद्भूतमिव दानवलोकम्, अशुभकर्मसमूहमिवैकत्र समागतम्, अनेकदण्डकारण्यवासिमुनिजनशापसार्थमिव संचरन्तम् अनवरतशरनिकरवर्षिरामनिहतखरदूषणबलनिवहमिव तदपध्यानात् पिशाचातामुपगतम्, कलिकालबन्धुवर्गमिवैकत्र संगतम्, अवगाहप्रस्थितमिव वनमहिषयूथम्, अचल-

शिखरस्थितकेसरिकराकृष्टिपतनशीर्णमिव कालाभ्रपटलम्, अखिल-रूपविनाशाय धूमकेतुजलमिव समुद्गतम्, अन्धकारितकाननम्, सहस्र संख्यम्, अतिभयजनकमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम् ।

**हिन्दी-अनुवाद**-(और) उस वनान्तराल से अपनी ओर आती हुई शबर-सेना को (मैंने) देखा-जो (राजा कार्तवीर्य) सहस्रार्जुन की हजारों भुजाओं द्वारा (इधर-उधर) बिखराई गई नर्मदा नदी की जलधारा के समान थी, जो प्रभञ्जन (वायु) द्वारा आन्दोलित तमालवन के समान थी, जो कालरा-त्रियों के पुञ्जीभूत प्रहरसमूह सी प्रतीत होती थी, जो पृथ्वी के प्रकम्प (भूचाल) वश मूच्छित बनाये गए काली चट्टानों के स्तम्भों के समुदाय सरीखी थी, जो रविरश्मियों से व्याकुल बनाई गई अन्धकारराशि प्रतीत होती थी, जो इतस्ततः पर्यटन करते हुए यमराज के परिवार-सी प्रतीत होती थी, जो विदीर्ण किये गये रसातल (पृथ्वी) से प्रकटी-भूत दानवगण-सी प्रतीत होती थी, जो एक स्थान पर इकट्ठे हुये पापकर्मों का समुदाय प्रतीत होती थी, जो संचरण करते हुए-अनेक दण्डकारण्यवासी मुनिजनों के (द्वारा दिये गये) शापसमूह-सी प्रतीत होती थी, जो निरन्तर बाणवर्षा करने वाले श्रीराम द्वारा मारी गई तथा उन (श्रीराम) के प्रति अपध्यान (दुर्भावना) होने के कारण (पुनः) पिशाचभाव प्राप्त करने वाली खरदूषण की सेना प्रतीत होती थी, जो परस्पर मिले हुए कलिकाल के बन्धुसमुदाय-सी प्रतीत होती थी, जो जलावगाहनार्थ चले हुये जंगली भैंसों के समूह जैसी थी, पर्वत-शिखरों पर विद्यमान वनकेसरियों के पंजों द्वारा (हाथी समझकर) बालादाकृष्ट अत-एव गिरने के कारण छिन्न-भिन्न हुए प्रलयकालीन मेघमण्डल-सी प्रतीत होती थी, जो समस्त (अरण्यचारी) जीव-जन्तुओं के विनाशार्थ उदित हुए पुच्छल-तारों का समूह प्रतीत होती थी, जिसने सम्पूर्ण वन को अन्धकारमय कर दिया था, जो कई हजार संख्या वाली थी, जो अत्यन्तभयावह थी और जो अमंगल-जनक वेताल (प्रेत) समूह-सी प्रतीत होती थी।

**संस्कृत-व्याख्या-च अभिमुखम्=समक्षम्, तस्मात्=पूर्वोक्तात्, वनान्तरात्**

=विपिनमध्यात्, **आपतत्**=आगच्छत्, **अर्जुनभुजदण्डसहस्रविप्रकीर्णम्**= अर्जुन: कार्तवीर्य: हैहयवंशयो नृप: तस्य भुजदण्डानां सहस्रं सहस्रसंख्याका: बाहव: तेन विप्रकीर्णम् विक्षिप्तम्, **नर्मदाप्रवाहम् इव**=नर्वदा रेवानदी तस्या: प्रवाह: स्रोत, तम् इव, **अनिलचलितम्**=पवनान्दोलितम्, **तमालकाननम् इव**=तमालानां तापिच्छानां काननं गहनम् इव, **कालरात्रीणाम्**=प्रलयनिशानाम्, **एकीभूतम्**=पञ्जीभूतम्, **यामसंघातम् इव**=यमानां प्रहराणां संघात: समुदाय: तम् इव, **क्षितिकम्पविघूर्णितम्**=क्षिते: कम्प: क्षितिकम्प: भूकम्प: तेन विघूर्णितम् मूर्छितम्, **अञ्जनशिलास्तम्भसंभारम् इव**=अञ्जनवत् कज्जलवत् शिला: पाषाणखण्डानि तासां स्तम्भा: स्थूणा: तेषां संभार: समूह: तम् इव, **रविकिरणाकुलितम्**=रवे: सूर्यस्य किरणा: करा: तै: आकुलितम् पर्यस्तम्, **अन्धकारपूरम् इव**=अन्धकारस्य तिमिरस्य पूरं प्रवाहम् इव, **परिभ्रमन्तम्**=पर्यटन्तम्, **अन्तकपरिवारम् इव**=यमकुटुम्बम् इव, **अवदारितरसातलोद्भूतम्**=अवदारितं विदारितं यद् रसातलं धरातलं तस्माद् उद्भूतम् **दानवलोकम् इव**= दानवानां दैत्यानांलोक: जगत् तम् इव, **एकत्र**=एकस्मिन् स्थाने, **समागतम्**= समायातम्, **अशुभकर्मसमूहम् इव**=अशुभकर्माणि पापकर्माणि तेषां समूह: तम् इव, **संचरन्तम्**=भ्रमन्तम्, **अनेकदण्डकारण्यवासिमुनिजनशापसार्थम् इव**= अनेके असंख्या ये दन्डकारण्यवासिन: दण्डकवननिवासिन: मुनिजना: ऋषिजन: तेषां शापा: दुर्वचनानि तेषां सार्थ: समूह: तम् इव **अनवरतशरनिकरवर्षिरामनिहतखरदूषणबलनिवहम्**=अनवरतं सततं शरनिकरं बाणसमूहं वर्षति मुञ्चति इति तच्छील: राम: राघव: तेन निहितानि व्यापादितानि खरदूषणयो: पाताललङ्काधिपत्यो: बलानि सैन्यानि तेषां निवह: समूह: तम् इव, **तदपध्यानात्**= तस्मिन् रामे अपध्यानं दुश्चिन्तनम् तस्माद्हेतो:, **पिशाचताम्**=भूतभावम्, **उपगतम्**=प्राप्तम्, **एकत्र**=एकस्थाने, **संगतम्**=सम्मिलितम्. **कलिकालात्-वर्गम् इव**=कालिकालस्य कलियुगस्य, **बन्धुवर्ग**=मित्रमण्डलम् तम् इव, **अवगाहप्रस्थितम्**=अवगाह: स्नानं तदर्थं प्रस्थितं प्रचलितम्, **वनमहिषयूथम् इव**= वनमहिषा: अरण्यसैरिभा: तेषां यूथ: समूह: तम् इव, **अचलशिखरस्थितकेसरकराकृष्टपतनशीर्णम्**=अचलस्य पर्वतस्य शिखरे शृंगे स्थित: विद्यमान: केसरी सिंह:

तस्य करौ पाणी ताभ्याम् आकृष्टि: आकर्षणं तया यत् पतनं भ्रंश: तेन शीर्ण चूर्णितम्, **कालाभ्रपटलम् इव**=श्याममेघमण्डलम् इव, **अखिलरूपविनाशाय**= अखिला: सम्पूर्णा: रूपा: जङ्गलपशव: मृगा: वा तेषां विनाशाय व्यापादनाय, **समुद्गतम्**=उदितम्, **धूमकेतुजालम् इव**=उत्पातग्रहमण्डलम् इव, **अन्धकारितकाननम्**=अन्धकारितम् अन्धकार: संजातोऽस्मिन् इति संजाततमस्कं काननं विपिनं येन तत्, **अनेकसहस्रसंख्यम्**=अनेकानि बहूनि सहस्राणि दशशतात्मकानि संख्या गणना यस्य तत् असंख्यमित्यर्थ:, **उत्पातवेतालव्रातम् इव**= उत्पाताय उपद्रवाय यो बेतालव्रात: भूतसमूह: तम् इव अतिभयजनकम् अत्यन्तभयङ्करम्, **शबरसैन्यम्**=किरातदलम्, **अद्राक्षम्** =अपश्यम् ।

**टिप्पणी–अर्जुन···प्रवाहमिव** (कार्तवीर्य) सहस्रबाहु अर्जुन, इसने एक समय अपनी हजार भुजाओं से नर्मदा के प्रवाह को रोककर जलक्रीड़ा की थी । इसकी नगरी का नाम माहिष्मती था । **अञ्जलशिला**–काजल के सदृश पत्थर, काला पत्थर । **अन्तक**–यमराज विवस्वान् का पुत्र (वैवस्वतोऽन्तक:, अमरकोष), विवस्वान् ने प्रसन्न होकर इन्हें मृत जीवों के धर्माधर्म विवेचन का अधिकार दे रखा है, इसलिये इन्हें धर्मराज भी कहा जाता है । दण्ड देने के कारण ये यमराज कहलाते हैं (यमो यमयतामस्मि, गीता) **अवदारित दानवलोकम्**–पौराणिक मान्यता है कि भूतल के नीचे के लोकों में दानवादियोनियों का निवास-स्थान है । प्रह्लाद के पौत्र विरोचन के पुत्र राजा बलि को भगवान् वामन ने तीन पैरों में उसकी पृथ्वी लेकर पाताल लोक में ही रहने का आदेश दिया । **दण्डक:···सार्थमिव**–दण्डक वन में एक बार दुर्भिक्ष पड़ने पर दण्डकारण्यनिवासी मुनि लोग गौतम ऋषि के आश्रम में पहुँचे । ऋषि ने तपोबल से उनकी पर्याप्तकाल तक रक्षा की । इसके बाद ऋषिजन पुन: दण्डकारण्य जाने की इच्छा करने लगे, किन्तु गौतम ऋषि के भय से आज्ञा लेने में संकोच करते रहे । उन्होंने छल से एक गौ की रचना की और उसे गौतम के धान्यागार में छोड़ दिया । गौतम ने जैसे ही उसका हाथ से स्पर्श किया उसने प्राण त्याग दिये । ऋषि लोग गोहत्या से गौतम जी को कलंकित होने का बहाना लेकर वहाँ से चले गये । बाद में जब इस छल का पता चला तो गौतम ऋषि ने शाप

दे दिया कि जिस दण्डकारण्य के लोभ से तुम मेरे आश्रम को छल से त्याग कर गये हो वह दण्डकारण्य भस्म हो जाये। इस शाप के कारण सभी मुनियों को अत्यधिक कष्ट उठाने पड़े और भगवान् राम के वहाँ जाने पर वह शाप समाप्त हुआ। **धूमकेतुजाल**–पुच्छलताराओं का समूह–ज्योतिष शास्त्र के अनुसार जहाँ पुच्छलतारा दिखाई देता है वहाँ के लोगों के अनिष्ट की कल्पना की जाती है। 'धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः' इतिविश्वः। यहाँ **एकीभूतमिव** से लेकर **वेतालव्रातमिव** तक सर्वत्र जात्युत्प्रेक्षालङ्कार है।

मध्ये च तस्यातिमहतः शबरसैन्यस्य प्रथमे वयसि वर्तमानम्, अतिकर्कशत्वादायसमयमिव, एकलव्यमिव जन्मान्तरागतम्, उद्भिद्यमानश्मश्रुराजितया प्रथममलेखामण्ड्यमानगण्डभित्तिमिव गजयूथपतिकुमारकम्, असितकुवलयश्यामलेन देहप्रभाप्रवाहेण कालिन्दीजलेनेव पूरितारण्यम्, आकुटिलाग्रेण स्कन्धावलम्बिना कुन्तल भारेण केसरिणमिव गजमदमलिनीकृतेन केसरकलापेनोपेतम्, आयतललाटम्, अतितुङ्गघोरघोणम्, उपनीतस्यैककर्णाभरणतां भुजगफणामणेरापाटलैरंशुभिरालोहितीकृतेन पर्णशयनाभ्यासाल्लग्नपल्लवरागेणेव वामपार्श्वेन विराजमानम्, अचिरप्रहतगजकपोलगृहीतेन सप्तच्छदपरिमलवाहिना कृष्णागुरुपङ्केनेव सुरभिणा मदेन कृताङ्गरागम्, उपरि तत्परिमलान्धेन परिभ्रमता मायूरपिच्छातपत्रानुकारिणा मधुकरकुलेन तमालपल्लवेनेव निवारितातपम्, आलोलपल्लवब्याजेन भुजबलनिर्जितया भयप्रयुक्तसेवया विन्ध्याटव्येव करतलेनापमृज्यमानगण्डस्थलस्वेदलेखम्,……।

**हिन्दी-अनुवाद**—उस अत्यन्त विशाल शबरसेना के बीच मैंने 'मातङ्ग' नामवाले भील सेनापति को देखा—जो पहली अवस्था ( यौवन ) में विद्यमान था, (शरीर की) अतिशय कठोरता के कारण जो लौहनिर्मित प्रतीत होता था, ( एक जन्म से ) दूसरे जन्म में आया हुआ एकलव्य प्रतीत होता था,

जो उत्पन्न होती हुई श्मश्रुपंक्ति (दाढ़ी की रोमराजि) के कारण प्रथम मदलेखा से शोभायमान कपोलमण्डल वाले गजराज के बच्चे के समान था, जो नील-कमल की भाँति श्यामल-देहप्रभा के प्रवाह से वनप्रदेश को मानो (श्यामल) यमुनाजल से आप्लावित कर रहा था, जो कुछ कुछ घुँघराले अग्रभागों वाले तथा स्कन्धदेश तक लटके हुए चूर्णकुन्तलसमूह (घुँघराली अलकों) के कारण (मारे गये) गजराज के मद से मलिनीकृत सटाभार से सुशोभित वनकेसरी के समान था, जो चौड़े मस्तक वाला था, जो अत्यन्त उन्नत तथा रौद्रनासिका वाला था, जो एक कर्णप्रान्त (अर्थात् बाएँ) में आभरण बनाई गयी सर्प की फणामणि की श्वेत-रक्त मयूखों द्वारा कुछ-कुछ लाल बनाये गये अतएव मानो पर्णशय्या पर शयन करने के अभ्यासवश पल्लवों की अरुणाई संवलित वाम-पार्श्व से शोभायमान था, जो सद्यः व्यापादित (मारे गये) गजराज के गडस्थल से गृहीत अतएव सप्तवर्ण (सतौना) वृक्ष की गन्ध को वहन करने वाले तथा कालागुरु के उबटन की भाँति सुरभियुक्त मदजल से चर्चित (शरीर वाला) था, जो मदजल की महक से विकलीभूत (अतएव सिर के) ऊपर संचरण करने वाले मयूरपंखी आतपत्र (छत्ते) का अनुकरण करने वाले तथा तमालपल्लव के समान (श्यामवर्णी) भ्रमरसमुदाय द्वारा अवरुद्ध सूर्यातप (धूप) वाला था, जो (कर्णा-वतंसीकृत) चञ्चल पल्लवों के बहाने मानो भुज पराक्रम से वशीकृत अतएव भय के कारण परिचर्या में लगी हुई विन्ध्यवनस्थली द्वारा (अपनी) हथेलियों से पोंछे जाते हुए कपोलमण्डल के स्वेद-बिन्दुओं वाला था।

**संस्कृत-व्याख्या–तस्य** पूर्वोक्तवर्णितस्य, **अतिमहतः**=अत्यन्तविशालस्य, **शबरसैन्यस्य**=किरातदलस्य च, **मध्ये**=अन्तः, **प्रथमे**=वार्धकापेक्षया पूर्वोत्तरे, **वयसि**=अवस्थायाम्, **वर्तमानम्**=विद्यमानम्, **अतिकर्कशत्वात्**=अतिकठिन-त्वात्, **आयसमयमिव**=आयसं लौहं तेन निर्मितम् इव, **लोहमयमिव**, **जन्मान्त-रागतम्**=अन्यद् जन्म जन्मान्तरम् अपरजन्म तस्मिन् आगतम् आयातम्, **एकल-व्यम् इव**=द्रोणशिष्यभूतं भिल्लकुमारम् इव, **उद्भिद्यमानश्मश्रुराजितया** =उद्भिद्यमाना श्मराजिः मुखलोमपंक्तिः यस्यः सः तस्य भावः तत्ता तया

उत्पद्यमानमुखलोमश्रेणितया, **प्रथममदलेखामण्ड्यमानगण्डभित्तिम्**—प्रथमा नवीना या मदलेखा तया मण्ड्यमाना अलङ्क्रियमाणा गण्डभित्ति: कपोलप्रदेश: यस्य तम्, **गजयूथपतिकुमारकम्**=गजानां हस्तिनां यूथपति: मण्डलाधिपति: गजेन्द्र: तस्य कुमारक: शावक: तम् इव, **असितकुवलयश्यामलेन**=असितं कृष्ण-वर्णं यत् कुवलयम् उत्पलं तद्वत् श्यामल: कृष्णवर्ण: तेन, **देह प्रभाप्रवाहेण**=देहस्य शरीरस्य प्रभाद्युति: तस्या: प्रवाह: स्रोत: तेन, **कालिन्दीजलेन इव**=यमुना-जलसदृशेन, **पूरितारण्यम**=पूरितं भृतम् अरण्यं काननं येन तम्, **गजमदमलिनी कृतेन**=गजमद: हस्तिदानवारि तेन मलिनीकृत: अमलिन: मलिन: कृत: इति कृष्णीकृत: तेन, **केसरकलापेन**=केसराणां जटानां कलाप: समूह: तेन युक्तम्, **केसरिणम् इव**=सिंहम् इव, **आकुटिलाग्रेण**=आ ईषत् कुटिलं कुञ्चितम् अग्रं प्रान्तभाग: यस्य तेन, **स्कन्धावलम्बिना**=स्कन्धयो: अंसदेशयो: अवलम्बते विराजते इति तच्छील:तेन, **कुन्तलभारेण**=कुन्तलनां बालानां भार: कलाप: तेन केशकलापेन, **उपेतम्**=युक्तम्, **आयतललाटम्**=आयत विशाल ललाटं भालं यस्य तम्, **अतितुङ्गघोरघोणम्**=अतितुङ्गा अत्युच्चा घोरा भयंकरो घोणा नासा यस्य तम्, **एककर्णाभरणताम्**=एककर्णस्य एकश्रोत्रस्य आभरणताम् आभूषणताम्, **उपनीतस्य**=प्रापितस्य, **भुजगफणामणे**=भुजग: सर्प: तस्य फणा फटा तस्या: मणि: रत्नं तस्य, **आपाटलै:**=आ ईषत् पाटला: श्वेत-रक्ता: तै:, **अंशुभि**=दीप्तिभि:, **आलोहितीकृतेन**=आ ईषत् लोहितं लोहितं कृतम् इति लोहितीकृतम् ईषल्लोहितीकृतम् आलोहितीकृतम् किञ्चिद् अरुणीकृतं तेन, अतएव, **पर्णशयनाभ्यासात्**=पर्णेषु पत्रेषु यत् शयनं स्वाप: तस्य अभ्या-सात् पुन: अनुष्ठानात्, **लग्नपल्लवरागेण इव**=लग्न: आश्लिष्ट: पल्लवानां किसलयानां राग: आरुण्यं यस्मिन् तथाभूतेन इव, **वामपार्श्वेन**=सव्यपक्षेण, **विराजमानम्**=शोभमानम्, **अचिरप्रहतगजकपोलगृहीतेन**—अचिरम् अविलम्बं प्रहत: व्यापादित: य: गज: करि: तस्य कपोलौ गण्डौ ताभ्यां गृहीतेन आदत्तेन, **सप्तच्छदपरिमलवाहिन:**=सप्त सप्तसंख्याया: छदा: पर्णानि यस्य स: सप्तपर्ण-वृक्ष: तस्य परिमल: गन्ध: तम् इव परिमलं वहति धारयति इति तच्छील: तेन, **कृष्णागुरुपंकेन इव**=कृष्णागुरु: काकतुण्ड: सुगन्धिद्रव्यविशेष: तस्य पङ्क: कर्दम:

तेन इव तत्सदृशेन, **सुरभिणा**=घ्राणतर्पणेन, **मदेन**=दानवारिणा, **कृताङ्ग-रागम्**=कृतः विहित अगरागः शरीरलेपनं येन तम्, **उपरि**=शिरोभागे, **तत्परिमलगन्धेन**=तस्य मदस्य परिमलः गन्धः तेन अन्धः मत्तः तादृशेन, **परि-भ्रमता**=पयर्टता, **मायूरपिच्छातपत्रानुकारिणा**=मयूरस्य इमानि मायूराणि मयूरसम्बन्धीनि पिच्छाणि बर्हाणि तेषाम् आतपत्रं छत्रं तद् अनुकरोति सादृश्यं भजते इति तच्छीलं तेन, **मधुकरकुलेन**=मधुकराणां भ्रमराणां कुलं समूहः तेन, **तमालपल्लवेन इव**=तापिच्छकिसलयेन इव, **निवारितातपम्**=निवारितः दूरीकृत. आतपः उष्णता येन तम्, **भुजबलनिर्जितया**=भुजयोः बाह्वोः बलं शक्तिः तेनः निर्जिता पराजित तया, **अतएव भयप्रयुक्तसेवया**=भयेन भीत्या प्रायुक्ता आरब्धा सेवा परिचर्या यया तया, **आलोलपल्लवव्याजेन**=आलोलाः चञ्चलाः पल्लवाः किसलयानि तेषां व्याजः छद्म तेन, **करतलेन इव**=पाणि-तलेन इव, **अपमृज्यमानगण्डस्थलस्वेदलेखम्**=अपमृज्यमाना प्रोञ्छ्यमाना गण्ड-स्थलयोः कपोलस्थलयोः स्वेदलेखा घर्मबिन्दुपङ्क्तिः यस्य तं तादृशम् ।

**टिप्पणी–प्रथमे वयसि**–युवा अवस्था में। **आयसमयम्**=लोहे का बना हुआ; (अयः एव आयसम् स्वार्थ में अण्) अयः और आयस दोनों शब्द लोहे के अर्थ में चलते हैं। **एकलव्य**=भीलकुमार, जिसने द्रोणाचार्य की प्रतिमा को गुरु बना कर बाणविद्या का अभ्यास करके अर्जुन को भी आश्चर्यान्वित कर दिया था। **श्मश्रुराजि**–दाढ़ी की रेखा। **सुरभि**–नासिका को तृप्त करने वाली गन्धवाला (सुरभिर्घ्राणतर्पणः, अमरकोष) **परिमल**–गन्ध; पत्र पुष्प आदि को मसलने से उत्पन्न गन्ध के लिये प्रयुक्त होने वाला यह शब्द अब सामान्य गन्धमात्र के लिये प्रचलित हो गया है। **'असित···अरण्यम्'** यहाँ **लुप्तोपमा द्रव्योत्प्रेक्षा** तथा **अतिशयोक्ति** का **संकर** है। **करतलेन इव** में **अपन्हवोत्प्रेक्षा** है।

आपाटलया हरिणकुलकालरात्रिसन्ध्यायमानया शोणितार्द्रयेव दृष्ट्या रञ्जयन्तमिवाशाविभागान्, आजानुलम्बिना कुञ्जरकरप्रमाण-मिव गृहीत्वा निर्मितेन चण्डिकारुधिरबलिप्रदानायासक्तनिशितशस्त्रो-ल्लेखविषमितशिखरेण भुजयुगलेनोपशोभितम्, अन्तरान्तरालग्नाश्यान-

हरिणरुधिरबिन्दुना स्वेदजलकणिकाचितेन गुञ्जाफलमिश्रैः करिकुम्भमुक्ताफलैरिव रचिताभरणेन विन्ध्यशिलातलविशालेन वक्षःस्थलेनोद्भासमानम्, अविरतश्रमाभ्यासादुल्लिखितोदरम्, इभमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरुदण्डद्वयेन, लाक्षालोहितकौशेयपरिधानम्, अकारणेऽपि क्रूरतया बद्धत्रिपताकोदग्रभ्रुकुटिकराले ललाटफलके प्रबलभक्त्याराधितया मत्परिग्रहोऽयमिति कात्यायन्या त्रिशूलेनेवाङ्कितम्...।

**हिन्दी-अनुवाद**–जो कुछ-कुछ पाटलवर्ण (श्वेत-रक्त) वाली अतएव मृग-समुदाय की कालरात्रि (मरणयामिनी) की (रक्तवर्णा) पूर्वसन्ध्या प्रतीत होने वाली तथा मानो (उनके) रक्त से गीली हुई (अपनी) दृष्टि से दिग्विभागों को रंग रहा था, जो घुटनों तक लटकने वाले अतएव मानो दिग्गजों शुण्डादण्डों की नाप लेकर (विधाता द्वारा) बनाये गये तथा महाकाली को रक्तबलि देने के लिये बारम्बार तीक्ष्ण किये गये (खड्गादि) शस्त्रों के संघर्षण वश क्षत-विक्षत हुये अग्रभागों वाले बाहु-युगल से अलंकृत था, जो बीच बीच में लगे हुये कुछ-कुछ सूखे हुये (मृत) हरिण को रक्तबिन्दुओं वाले स्वेद जलकणों से परि-व्याप्त अतएव मानो गुञ्जाफलों से सम्मिश्रित गजकुम्भों से उत्पन्न मुक्ताफलों से अलंकरण सम्पन्न किये हुये तथा विन्ध्य-शिलातल के समान विस्तीर्ण वक्षः-स्थल से शोभायमान था, जो निरन्तर किये जाने वाले श्रम की पौनः पुन्येन आवृत्ति होने के कारण उल्लिखित (कृश अथवा चिन्हित) उदरवाला था, जो स्तम्भसदृश ऊरुयुगल (दोनों जाँघों) से मानों गजमद से मलिन हुये आलान (गजबन्धनार्थ) स्तम्भयुगल का उपहास कर रहा था, जो लाक्षारस से रंगे हुये रेशमी वस्त्रों वाला था, जो (क्रोध का) कारण न होने पर भी निष्करुण जाति का होने के कारण त्रिवलियों से संवलित ऊँची भौंहों के कारण विकराल भाल-फलक पर मानो उत्कृष्ट भक्ति से वशीभूत भगवती दुर्गा द्वारा यह (मातङ्ग) मेरा प्रियजन है'–ऐसा समझकर त्रिशूल से चिन्हित कर दिया गया था।

**संस्कृत-व्याख्या-आपाटलया**=ईषच्छ्वेतरक्तया, हरिणकुलकालरात्रिसंध्या

**यमानया**=हरिणानां मृगाणां कुलं वृन्दं तस्य काल रात्रि: विनाशनिशा तस्या: सन्ध्यायमाना सन्ध्यावद् आचरतीति सन्ध्यायमाना सन्ध्यासदृशी तया, **शोणिताद्रया इव**=शोणितं रक्तं तेन आर्द्रा क्लिन्ना तया इव रक्तस्नातया इव, **दृष्ट्या**=नेत्रेण, **आशाविभागान्**=दिग्भागान्, **रञ्जयन्तम् इव**=रक्तीकुर्वन्तम् इव, **आजानुलम्बिना**=आजानु ऊरुपर्वपर्यन्तं लम्बते इति तच्छीलम् तेन, अतिदीर्घेण इति भाव:, **कुञ्जरकरप्रमाणमिव**=कुञ्जर: करी तस्य कर: शुण्डा तस्य प्रमाणम् इव परिमाणम् इव, **गृहीत्वा**=आदाय, **निर्मितेन**=विरचितेन, **चण्डिकारुधिरबलिप्रदानाय**=चण्डिका दुर्गा तस्यै रुधिरबले: रक्तोपहारस्य प्रदानं समर्पणं तस्मै, **असकृत्**=वारं वारम्, **निशितशस्त्रोल्लेखविषमितशिखरेण**=निशितानि तीक्ष्णानि शस्त्राणि खड्गादीनि तेषाम् उल्लेख:-शाणघर्षणं तेन विषमितम् उन्नतानतं शिखरं भुजशिर: यस्य तेन, **भुजयुगलेन**=बाहुद्वन्द्वेन, **उपशोभितम्**=विराजमानम्, **अन्तरान्तरा**=मध्ये-मध्ये, **लग्नाश्यानहरिणरुधिरबिन्दुना**=लग्ना: आश्लिष्टा: अश्याना: अशुष्का: हरिणानां मृगाणां रुधिर-बिन्दव: रक्तकणा: यत्र तेन, **स्वेदजलकणिकाचितेन**=स्वेदजलं घर्मजलं तस्य कणिका: बिन्दव: ताभि: चितेन व्याप्तेन, अतएव **गुञ्जाफलमिश्रै:**=गुञ्जाफलानि काकचिञ्चाफलानि तै: मिश्रै: संयुक्तै:, **करिकुम्भमुक्ताफलै:**=करिणां हस्तिनां कुम्भेषु शिर:पिण्डेषु यानि मौक्तिकानि तै:, **रचिताभरणेन इव**=रचितं निर्मितम् आभरणम् आभूषणम् यस्य तेन इव, **विन्ध्यशिलातलविशालेन**=विन्ध्यस्य विन्ध्याख्यपर्वतस्य शिलातलं प्रस्तर:तद्वत् विशालेन आयतेन, **वक्ष:-स्थलेन**=उर:स्थलेन, **उद्भासमानम्**=देदीप्यमानम्, **अविरतश्रमाभ्यासात्**=अविरतं निरन्तरं य: श्रम: व्यायाम: तस्य अभ्यासात् पुन: पुन: अनुष्ठानात्, **उल्लिखितोदरम्**=उल्लिखितं कृशम् उदरं जठरं यस्य तम्, **ऊरुदण्डद्वयेन**=ऊर्वौ दण्डौ इव इति ऊरुदण्डौ तयो: द्वयं तेन जङ्घायुगलेन, **इभमदमलिनम्**=इभानां हस्तिनां मदेन दानवारिणा मलिनं श्यामवर्णम्, **आलानस्तम्भयुगलम्**=आलानं गजबन्ध: तदेव स्तम्भ: स्थूण: तयो: युगलं द्वन्द्वम् तद् उपहसन्तम् इव=तिरस्कुर्वन्तम् इव, **लाक्षालोहितकौशेयपरिधानम्**=लाक्षालोहितं लाक्षारस-रञ्जितं कौशेयं क्षौमं परिधानम् अधोंऽशुकं यस्य तम्, **अकारणेऽपि**=हेतु-

विरहेऽपि, **क्रूरतया**=घातकतया, **बद्धत्रिपताकोदग्रभ्रुकुटिकराले**=बद्धा रचिता त्रिपताका त्रिवलिः या सा चासौ उदग्रा उन्नता भ्रकुटिः कुटिलभ्रूलता तया कराले कुटिले, **ललाटफलके**=ललाटं फलकम् इव इति तस्मिन् भालपट्टे **प्रबलभक्त्याराधितया**=प्रबला उत्कृष्टा या भक्तिः आराधना तया आराधिता पूजिता तया, **कात्यायन्या**=दुर्गया, **अयम्**=एष मातङ्गः, **मम**=दुर्गायाः, **परिग्रहः** कृपापात्रम्, **त्रिशूलेन**=त्रिशूलाख्यास्त्रविशेषेण, **अंकितम् इव**=चिन्हितमिव ।

**टिप्पणी-आशाविभागान्**–दिग्भाग, सभी दिशायें ; दिशाओं के नाम इस प्रकार हैं–पूर्व, आग्नेय, दक्षिण, नैर्ऋत्य, पश्चिम, वायव्य, उत्तर, ईशान, ऊर्ध्व अधः । **अविरत···उदरम्**–सर्वदा व्यायाम करने से जिसका पेट (पेट की चर्बी) छट गया था और इसीलिये जो बीच से खरादा गया–सा लगता था । गुप्त-कालीन कला के आदर्श रूप में शारीरिक सौन्दर्य के लिए मध्यभाग का उल्लिखित होना आवश्यक था । **आलान**–हाथी बांधने का खूंटा, 'आलानं बन्धस्तम्भे' (अमरकोष) के अनुसार आलान का अर्थ स्वयं बन्धस्तम्भ है फिर भी बाण ने आलानस्तम्भ लिखा है इससे ज्ञात होता है कि उस समय आलान केवल 'बन्धन' के अर्थ में प्रयुक्त होने लगा था इसलिये बाद में कोशों में 'आलानं गजबन्धनम्' पाठ भी दिखाई देता है । **बद्धत्रिपताका···कराले**–त्रिपताका युक्त उग्र भौंहों से विकराल लगने वाला माथा । अहिच्छत्रा से प्राप्त मिट्टी के खिलौनों में एक गुप्तकालीननृसिंहमूर्ति में भी त्रिशूल से अंकित जैसी त्रिपताक भृकुटी का सुन्दर चित्रण पाया जाता है । **उपहसन्तमिव** में क्रियोत्प्रेक्षालङ्कार है । **'अंकितमिव'** मे भी **क्रियोत्प्रेक्षा है ।**

उपजातपरिचयैरनुगच्छद्भिः श्रमवशाद् दूरनिर्गताभिः स्वभाव-पाटलया शुष्काभिरपि हरिणशोणितमिव क्षरन्तीभिर्जिह्वाभिरावेद्य-मानखेदैर्विवृतमुखतया स्पष्टदृष्टदन्तांशून् दंष्ट्रान्तराललग्नकेसरि-सटानिव सृक्कभागानुद्वहद्भिः स्थूलवराटकमालिकापरिगतकण्ठै-र्महावराहदंष्ट्राप्रहारजर्जरैरल्पकायैरपि महाशक्तित्वादनुपजातकेस-

रीव केसरिकिशोरकैर्मृगवधवैधव्यदीक्षादानदक्षैरनेकवर्णैः श्वभिरति-प्रमाणाभिश्च केसरिणामभयप्रदानयाचनार्थमागताभिः सिंहीभिरिव कौलेयककुटुम्बिनीभिरनुगम्यमानम्…।

**हिन्दी-अनुवाद**–जो परिचय उत्पन्न हो जाने के कारण अनुगमन करने वाले (आखेटजन्य) परिश्रम के कारण दूर तक (मुँह से बाहर) निकली हुई स्वभावतः पाटलवर्णी (श्वेतरक्त) होने के कारण सूखी हुई होने पर भी मानो मृगरुधिर का क्षरण (वमन) करती हुई जीभों से (अपनी) विषण्णता का ज्ञापन करने वाले-मुख खुले होने के कारण स्पष्टतः दृष्टिगोचर होती हुई दन्त-दीप्तियों वाले अतएव मानो दाढों के बीच में लगी हुई वनकेसरी की सटाओं (स्कन्धकेसरों) वाले ओष्ठप्रान्त को वहन करते हुए–बड़ी-बड़ी कौड़ियों की माला से घिरे हुए कण्ठदेशों वाले-विशाल वनशूकरों की मार से शिथिल अङ्गों वाले छोटा आकार होने पर भी प्रौढ़पराक्रम वाला होने के कारण अनुत्पन्न स्कन्धकेशों वाले वनकेसरी के बच्चों जैसे प्रतीत होते हुए तथा हरिणाङ्गनाओं को वैधव्यव्रत प्रदान करने में निपुण-अनेक रंगों वाले (शिकारी) कुत्तों एवं विशालकाय अथच (अपने पतियों) वनकेसरियों के लिए अभयदान (प्राणरक्षा) की अभ्यर्थना करने के लिए आई हुई सिंहनियों–सी प्रतीत होने वाली कुतियो द्वारा अनुसरण किया जा रहा था।

**संस्कृत-व्याख्या**–**उपजातपरिचयैः**=उपजातः परिचयः संस्तवः येषां तैः, अतएव **अनुगच्छद्भिः**=अनुसरद्भिः, **श्रमवशात्**=श्रमः गमनखेदः तस्य वशात्, **स्वभावपाटलतया**=स्वभावेन प्रकृत्या पाटलाः श्वेतरक्ताः तासां भावः तत्ता तया, **शुष्काभिः अपि**=नीरसाभिः अपि, **हरिणशोणितम्**=हरिणानां मृगाणां शोणितं रुधिरम्, **क्षरन्तीभिः इव**=स्रवन्तीभिः इव, **जिह्वाभिः**=रसनाभिः, **आवेद्यमानखेदैः**=आवेद्यमानः प्रकटीक्रियमाणः खेदः श्रमः यैः तैः, **विवृतमुखतया**=विवृतं व्यात्तं मुखं लपनं येषां ते विवृतमुखाः तेषां भावः तत्ता तया, **स्पष्टदृष्टदन्तांशून्**=स्पष्टं सुस्फुटं दृष्टाः अवलोकिताः दन्तानां रदानां अंशवः किरणाः तान्, **अत एव दंष्ट्रान्तराललग्नकेसरिसटान् इव**=दंष्ट्राणां दशनानाम् अन्तराले मध्ये

लग्नाः सक्ताः केसरिणां सिंहानां सटाः केसराः येषु तान् इव, **सृक्कभागान्**=ओष्ठप्रान्तान्, **उद्वहद्भिः**=धारयद्भिः, **स्थूलवराटकमालिकापरिगतकण्ठैः**=स्थूलाः पीवराः वराटकाः कपर्दकाः तेषां मालिकाः स्रजः ताभिः परिगताः वेष्टिताः कण्ठाः गलप्रदेशाः येषां तैः, **महावराहदंष्ट्राप्रहारजर्जरैः**=महावराहाः वनशूकरा तेषां दंष्ट्राः दाढ़ाः तासां प्रहाराः आघाताः तैः, जर्जराः क्षतविक्षताः तैः, **अल्पकायैः अपि**=स्वल्पशरीरैः अपि सद्भिः, **महाशक्तित्वात्**=महती प्रबला शक्तिः सामर्थ्यं येषां ते महाशक्तयः तेषां भावः तत्त्व तस्मात्, **अनुपजातकेसरैः**=अनुपजाता अनुत्पन्नाः केसराः सटाः येषां तैः, **केसरिकिशोरकैः इव**=केसरिणां सिंहानां किशोरकाः शिशवः तैः इव सिंहशिशुसदृशैरित्यर्थः **मृगवधूवैधव्यदीक्षादानदक्षैः**=मृगाणां हरिणानां बध्वः स्त्रियः हरिण्यः ताभ्यः यत् वैधव्यदीक्षादानं वैधव्यं विनष्टभर्तृकता तस्य दीक्षा व्रतशिक्षा तस्याः दानं शिक्षणं तस्मिन् दक्षैः कुशलैः, **अनेकवर्णैः**=अनेके बहवः वर्णाः रक्तपीतादयः येषां तैः, **श्वभिः**=कौलेयकैः, **अतिप्रमाणाभिः**=विशालाकाराभिः, **केसरिणाम्**=सिंहानाम्, **अभयप्रदानयाचनार्थम्**=अभयस्य मरणभयविरहस्य प्रदानम् आश्वासनं तस्य याचनार्थं प्रार्थनार्थम्, आगताभिः=आयताभिः, **सिंहीभिः इव**=सिंहिनीभिः इव, **कौलेयककुटुम्बिनीभिः**=सारमेयभार्याभिः, **च**=समुच्चयार्थकोऽयम्, **अनुगम्यमानम्**=अनुव्रज्यमानम् ।

**टिप्पणी–सृक्कभाग**–जबड़े, ओष्ठों के दोनों प्रान्त भाग । **क्षरन्तीभिरिव में क्रियोत्प्रेक्षा है । सिंहीभिरिव में जात्युत्प्रेक्षा है ।**

कैश्चिद्-गृहीतचमरबालगजदन्तभारैः, कैश्चिदच्छिद्रपर्णबद्धमधुपुटैः कैश्चिन्मृगपतिभिरिव विभिन्नगजकुम्भमुक्ताफलनिकरसनाथपाणिभिः, कैश्चिद्यातुधानैरिव गृहीतपिशितभारैः, कैश्चित् प्रमथैरिव केसरिकृत्तिधारिभिः, कैश्चित् क्षपणकैरिव मयूरपिच्छवाहिभिः, कैश्चिच्छिशुभिरिव काकपक्षधरैः, कैश्चित् कृष्णचरितमिव दर्शयद्भिः समुत्खातविधृतगजदन्तैः, कैश्चिज्जलदागमदिवसैरिव जलधरच्छायामलिनाम्बरैरनेकवृत्तान्तैः शबरवृन्दैः परिवृतम्....।

देखते हुए । उत्+प्र+ईक्ष्+शानच् । उपसर्तुं–उप+सृ+तुमुन् ।

अजातपक्षतया नातिस्थिरतरचरणसंचारस्य मुहुर्मुहुर्मुखेन पततो मुहुस्तिर्यङ् निपतन्तमात्मानमेकया पक्षपाल्या संधारयतः क्षिति-तलसंसर्पणश्रमातुरस्यानभ्यासवशादेकमपि दत्त्वा पदमनवरतमुन्मु-खस्य स्थूलस्थूलं श्वसतो धूलिधूसरस्य संसर्पतो मम समभून्मनसि–अति-कष्टास्ववस्थावपि जीवितनिरपेक्षा न भवन्ति खलु जगति प्राणिनां वृत्तयः । नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम् । एवमुपरतेऽपि सुगृहीतनाम्नि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि । धिङ् मामकरुणमतिनिष्ठुरमकृतज्ञम् । अहो! सोढपितृमरणशोकदारुणं येन मया जीव्यत, उपकृतमपि नापेक्ष्यते । खलं हि खलु मे हृदयम् ।

हिन्दी-अनुवाद–(पूर्ण रूप से) पंखे न जमे रहने के कारण डग-मगाते हुए पैरों से सञ्चरण करने वाले, बारम्बार मुँह के बल गिरते हुए, अनेकशः तिरछे होकर गिरते हुए अपने को एक पक्षपाली (पंखों की पंक्ति) से संभालते हुए भूतल पर घिसटने से उत्पन्न थकावट से चूर-चूर अनभ्यास के कारण एक भी डग आगे रख कर निरन्तर ऊपर की ओर मुँह उठाए रहने वाले, लम्बी-लम्बी साँसें लेने वाले तथा धूल से लिपटे हुए, सञ्चरण करने वाले मेरे मन में आया–(हाय !) 'अत्यन्त कष्टमयी दशाओं में भी लोग अपने प्राणों का मोह नहीं छोड़ पाते' निश्चय ही संसार में प्राणियों की यही प्रवृत्तियां हैं । इस संसार में समस्त प्राणियों के लिए जीवन से बढ़कर अधिक प्रियवस्तु और कुछ नहीं है । तभी तो मैं इन्द्रियों की विकलता से हीन होकर (अर्थात् स्वस्थ चित्तवाला) सुगृहीत नाम वाले पितृचरण के इस प्रकार (क्रूरशबर द्वारा अकालहत) स्वर्गवासी हो जाने पर भी जी ही रहा हूं ! धिक्कार है मुझ जैसे निर्दय, अत्यन्त क्रूर एवं कृतघ्न (व्यक्ति) को ! ! ओह, पिता जी के मृत्युशोक को सह्य कर जो कि मैं यातनापूर्वक (अर्थात् बेबसी में) जी रहा हूं, (उनके द्वारा किए गए) उपकार की भी मुझे लाज नहीं है (कि मर जाऊं !) । निश्चय ही मेरा हृदय दुष्ट (उपकारानभिज्ञ) है ।

संस्कृत-व्याख्या—अजातपक्षतया = अनुत्पन्नच्छदतया, नातिस्थिरतर-चरणसंचारस्य=नातिस्थिरतरः अल्पस्थिरः चरणयोः पादयोः संचारः यस्य तादृशस्य, अत एव मुहुर्मुहुः=पुनः पुनः, मुखेन=लपनेन, पततः=लुण्ठतः, मुहुः =पुनः, तिर्यक्=तिरश्चीनम्, निपतन्तम्=लुठन्तम् आत्मानम्=स्वम्; एकया=केवलया, पक्षपाल्या=पक्षप्रदेशेन, संधारयतः=संदधतः, क्षितितल-संसर्पणश्रमातुरस्य=क्षितितले भूतले यत् संसर्पणं रिङ्गणं तेन यः श्रमः खेदः तेन आतुरस्य पीडितस्य, अनभ्यासवशात्=चलनाभ्यासाभावात्, एकम् अपि, = केवलम् अपि, पदम्=चरणम् दत्त्वा=निधाय, अनवरतम्=सततम्, उन्मु-खस्य=उत् ऊर्ध्वीकृतं मुखं लपनं येन तादृशस्य, स्थूलस्थूलम्=दीर्घदीर्घम्, श्वसतः=प्राणतः, धूलिधूसरस्य=धूलिभिः भूरजोभिः धूसरस्य धूम्रवर्णस्य, संसर्पतः=रिङ्गतो भूम्याम्, मम=वैशम्पायनस्य, मनसि=हृदये, समभूत्= समुत्पन्नः, अयं विचार इति शेषः। विचारं स्पष्टयति–खलु=निश्चयेन, जगति =लोके, अतिकष्टासु=अत्यन्तक्लेशकारिणीषु, अवस्थासु अपि=दशासु अपि, प्राणिनाम्=जीवानाम्, वृत्तयः=व्यापाराः मनोवृत्तयो वा, जीवितनिरपेक्षा= जीवितात्प्राणधारणात् निरपेक्षाः उदासीनाः, न भवन्ति=न विद्यन्ते, इह जगति=अस्मिन् भुवने, सर्वजन्तूनाम्=समस्तजीवानाम्, जीवितात्=प्राण-धारणात्, अन्यत्=इतरत्, अभिमततरम्=प्रियतरम् नास्ति=न विद्यते, तदेव समर्थयन्नाह-यत=यस्मात् कारणात्, सुगृहीतनाम्नि=सुगृहीतं नाम यस्य तस्मिन् प्रातः स्मरणीये ताते=जनके, एवम्=उक्तरूपेण, उपरतेऽपि =मृतेऽपि, अहम्=वैशम्पायनः, अविकलेन्द्रियः=अविकलानि स्वस्थानि (विषयग्रहणे समर्थानीत्यर्थः) इन्द्रियाणि श्रोत्रादीनि यस्य तादृशः सन्, पुनरेव =भूयोऽपि, प्राणिमि=श्वसिमि, अकरुणम्=निर्दयम्, अतिनिष्ठुरम्=अति-कठोरम्, अकृतज्ञम्=अकृतज्ञम् अनुपकारज्ञम्, माम्=वैशम्पायनम्, धिक्= धिक्कारः, अहो=आश्चर्यम्, येन=येन हेतुना, अतः मया=वैशम्पायनेन, सोढपितृमरणशोकदारुणम्=सोढः मर्षितः यः पितुः तातस्य मरणस्य मृत्योः शोकः विषादः तेन दारुणं भयङ्करं यथा स्यात् तथा, जीव्यते=जीवनानि धार्यते, उपकृतमपि=तातविहित उपकारोऽपि, नापेक्ष्यते=अपेक्षा न क्रियते, येन=हेतुना खलु=निश्चयेन, मे=मम, हृदयम्

=मनः, खलम् =नीचं दुष्टं वा, हि=अवधारणार्थकमिदमव्ययपदम् ।

टिप्पणी-अजातपक्षतया-न जातपक्षतया=अजातपक्षतया, जात-जन् +क्त । स्थिरता-स्थिर+तरप् । पततः-पत्+शतृ ष० ए० व० । पक्षपाल्या-करवट के सहारें से, पार्श्वप्रदेश के द्वारा (पक्ष-पार्श्व, करवट, पालीप्रदेश-स्थान) । 'पालिः करालितायां स्यात् प्रदेशे पंक्तिचिह्नयोः' इत्यमरः । वृत्तयः-व्यापार, व्यवहार, मनोवृत्ति, वृ+क्तिन् । उपरते-उप+रम्+क्त, स० ए० व० । सुगृहीतनाम्नि--जिनका नाम सम्मान के साथ लिए जाने योग्य है ; प्रातः स्मरणीय(स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते, त्रिकाण्डशेष) । सोढः-सहन किया (सह्+क्त) । दारुण- 'दृ' (भये)+उनन् । 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरः ।

अहं हि लोकान्तरगतायामम्बायां नियम्य शोकावेगमाप्रसवदिवसात् परिणतवयसापि सता तैस्तैरुपायैः संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता मत् तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम् । अतिकृपणाः खल्वमी प्राणाः यदपकारिणमपि तातमद्यापि गच्छन्तं नानुगच्छन्ति । सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा, यदीदृगवस्थमपि मामयमायासयति जलाभिलाषः । मन्ये चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम सलिलपानबुद्धिः ।

हिन्दी-अनुवाद-जन्म देने के बाद ही मां के स्वर्गवासिनी हो जाने पर पत्नी के मृत्युजन्य शोक के वेग को रोक कर, पैदा होने के दिन से ही ढलती अवस्था वाले (अर्थात् वृद्धप्राय) भी सज्जन पितृचरण द्वारा (वात्सल्य) स्नेह के कारण अत्यन्त महान् पालन-पोषण सम्बन्धी कष्ट को कुछ न समझते हुए जो मैं उन-उन अर्थात् श्रमसाध्य उपायों द्वारा पाला गया वह सब आज एक साथ ही भूल गया । सचमुच मेरे ये प्राण अत्यन्त कृपण (क्षुद्र) हैं जो उपकारपरायण भी परलोक जाते हुए पिता जी का आज अनुगमन नहीं कर रहे हैं । 'जीवन का लोभ किसे पामर नहीं बना देता है' ऐसी बात बिल्कुल

नहीं है अर्थात् अवश्य बना देता है जो कि इस प्रकार की (दयनीय) अवस्था वाले भी मुझको जल पीने की इच्छा कष्ट दे रही है। मरने को कौन कहे! मानता हूँ कि पिता जी के मृत्युशोक की परवाह न करने वाले मुझ सरीखे व्यक्ति की यह जल पीने की धारणा केवल निर्दयता ही है (और कुछ नहीं!)

संस्कृत-व्याख्या—हि=निश्चयेन, अम्बायाम्=जनन्याम् लोकान्तरम्=अन्यो लोकः लोकान्तरं तत्र गतायाम्-परलोकप्रयातायाम्, सत्याम्, शोकावेगम्=शोकस्य विषादस्य आवेगः, प्रवाहः,तम्=विषादप्रवाहम्,नियम्य=निरुध्य, तातेन=जनकेन, परिणतवयसा=परिणतं परिपक्वं वयः अवस्था यस्य तादृशेन वृद्धेन, सता अपि=भवता अपि, तैः तैः=विभिन्नैः, उपायैः=क्षुधा-पिपासाशमनात्मकैः, अतिमहान्तम् अपि=महत्तमम् अपि, संवर्धनक्लेशम्=संवर्धने पालने यः क्लेशः कष्टं तम्, स्नेहवशात्=वात्सल्यात्, अगणयता=अननुभवता, अमन्यमानेनेत्यर्थः,यत्=यत्स्वरूपम्, यत्किमपि, परिपालितः=पोषितः, अहमिति शेषः, मया=वैशम्पायनेन, तत्सर्वम्=तत्सकलं पालनादि-कम्, एकपदे=तत्काले, त्वरितमित्यर्थः विस्मृतम्=स्मृतिपथाद् अपसारितम्, खलु=निश्चयेन, अमी=इमे, प्राणाः=असवः,अतिकृपणाः=अत्यन्ततुच्छाः, यतः=यस्मात् कारणात्, उपकारिणम् अपि=परलोकं यान्तम् अपि, न अनुगच्छन्ति=नहि अनुसरन्ति, जीविततृष्णा=जीवितस्य प्राणधारणस्य तृष्णा इच्छा, कञ्चित्=कमपि प्राणिनम्, सर्वथा=समस्तप्रकारेण, न खलीकरोति=अखलं खलं करोतीति, खलीकरोति, न नीचं विदधाति, इति न=नैवम्, प्रत्येकं खलीकरोतीत्यर्थः। यत्=यतः, यस्माद् हेतोः, ईदृगवस्थम् अपि=ईदृशी अवस्था यस्य तम् अपि मृतपितृकम् अपि, माम्=वैशम्पायनम् अयम्=अनभूयमानः, जलाभिलाषः=पानीयपानेच्छा, आयासयति=प्रयत्नं कारयति क्लेशयति वा। च=तथा अहं मन्ये=अनुभवामि, यत् अगणितपि-तृमरणशोकस्य=अगणितः अननुभूतः उपेक्षितो वा पितुः जनकस्य मरणस्य मृत्योः शोकः विषादः येन तस्य, मम=वैशम्पायनस्य, इयम्=उत्पद्यमाना, सलिलपानबुद्धिः=जलाभिलाषी,केवलम्=एकमात्रम्,निर्घृणताएव=निष्क-

रुणता एव ।

**टिप्पणी**–नियम्य-नि+यम्+क्त्वा–ल्यप् । परिणतवयसापि=पकी हुई अवस्था वाला होकर वृद्ध होते हुए भी। परिपालितः-परि+पाल्+क्त। एकपदे–एक दम, एक पग ही, तुरन्त ही; 'तत्क्षणैकपदे तुल्ये' इति हलायुधः। विस्मृतम्-वि+स्मृ+क्त । न कंचिन्न खलीकरोति-ऐसा कोई प्राणी नहीं जिसे जीवन की अभिलाषा खल नहीं बना देती या जिससे नीच काम नहीं करा देती अर्थात् प्रत्येक प्राणी को निश्चय ही खल बना देती है। निर्घृणत्व=निर्दयता ही। यहाँ अर्थान्तरन्यास तथा हेतु अलंकार हैं।

अद्यापि दूर एव सरस्तीरम्। तथा हि-जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतम्, अस्फुटानि श्रूयन्ते सारसविरुतानि, अयं च विप्रकर्षादाशामुखविसर्पणविरलः संचरति नलिनीषण्डपरिमलः। दिवसस्य चेयमतिकष्टा दशा वर्तते। तथा हि-रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनलधूलिनिकरमिव विकिरति करैः, अधिकामुपजनयति तृषमातपसंतप्तपांसुपटलदुर्गमा भूः, अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि, अप्रभुरस्म्यात्मनः, सीदति मे हृदयम्, अन्धकारतामुपयाति चक्षुः, अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्यैवोपपादयेत् ।

**हिन्दी-अनुवाद**–सरोवर अब भी दूर ही है क्योंकि जलदेवता के पायलों की झनकार का अनुकरण करने वाली कलहंसों की यह (मधुर) ध्वनि अब भी दूर है। सारस पक्षियों के कलरव स्पष्टतः नहीं सुनाई पड़ रहे हैं और यह कमलनियों के समूह से उत्पन्न सौरभ दूर होने के कारण दिशाओं में परिव्याप्त अतएव विरल (न्यून) रूप में इधर-उधर फैल रहा है।

दिन की (भी) यही अत्यन्त क्लेशमयी दशा है। क्योंकि आकाशमंडल के बीचोबीच विद्यमान सूर्य प्रज्वलित धूप को अग्निस्फुलिङ्गों के समूह की भाँति किरणों से निरन्तर बिखेर रहा है (तथा) अत्यधिक प्यास उत्पन्न कर रहा

है। (प्रचण्ड) घाम से भरपूर तपी हुई धूलियों के समूह से भूमि चलने योग्य नहीं रह गई है। अत्यन्त प्रबल प्यास के कारण अवसन्न (निर्जीवप्राय) मेरे कोमल अंग तनिक भी आगे बढ़ने में समर्थ नहीं हैं। (अब) मैं अपना प्रभु नहीं रहा (अर्थात् अपनी ही देह पर मेरा नियन्त्रण नहीं है) मेरा हृदय बैठ रहा है। आंख में अंधेरा छा रहा है। कितना अच्छा होता। (यदि) दुष्ट विधाता न चाहते हुये भी मेरी मृत्यु आज ही उत्पन्न कर देता ! !

संस्कृत-व्याख्या–अद्य अपि=साम्प्रतमपि, सरस्तीरम्=सरसः सरोवरस्य तीरं तटम्, दूरे एव=समीपे एव, तथाहि=उक्तवचनसमर्थनाय इदमव्ययपदम्, जलदेवतानूपुररवानुकारि=जलदेवतानां उदकाधिष्ठातृदेवीनां नूपुराणां मञ्जीराणां रवं ध्वनिम् अनुकरोति सादृश्यं भजते इति तच्छीलम्, कलहंस-विरुतम्=कलहंसानां कादम्बानां विरुतं कूजितम्, अद्यापि=अधुना अपि, दूरे =समीपे सारसरसितानां=सारसानां लक्ष्मणानां रसितानि कूजितानि, अस्फु-टानि=अस्पष्टानि, श्रूयन्ते=आकर्ण्यन्ते, अयं च=एष च, नलिनीषण्डप-रिमल:=नलिनीनां कमलिनीनां षण्डः समूहः तस्य परिमलः सौरभः, विप्र-कर्षात्=दूरात्, आशामुखविसर्पणविरल:=आशानां दिशां मुखेषु लपनेषु विसर्पणेन प्रसरणेन विरलः स्वल्पः सन्, संचरति=इतः प्रसरति, दिवसस्य च =दिनस्य च, इयम्=अनुभूयमाना, दशा=अवस्था, अतिकष्टा=अत्यन्तक्ले-शकारिणी, वर्तते=विद्यते, तथाहि=उक्तवचनसमर्थनायेदम्, अम्बरतलमध्य-वर्ती=अम्बरतलस्य आकाशतलस्य मध्ये वर्तते इति तच्छीलः मध्यगामी, मध्या-ह्नकालिक इत्यर्थः, रविः=दिनकरः, करैः=किरणैः, अनवरतम्=सततम्, अनलधूलिनिकरम् इव=अनलस्य वैश्वानरस्य धूलयः कणिकाः तासां निकरः समूहः तम् इव, स्फुरन्तम्=देदीप्यमानम् आतपम्=तेजः, विकिरति= विक्षिपति, आतपसंतप्तपांसुपटलदुर्गमा=आतपेन सूर्यतेजसा संतप्तम् उष्णीकृतं यत् पांसूनां धूलिनां पटलं समूहः तेन दुर्गमा दुश्चरा, दुःखेन गन्तुं योग्या इत्यर्थः, भूः=धरा, अधिकाम्=अधिकतराम्, तृषम्=पिपासाम्, उपजनयति=उत्पा-दयति, अतिप्रबलपिपासावसन्नानि=अतिप्रबला अधिकबलवती या पिपासा तृषा तया अवसन्नानि, शिथिलानि, मे=मम वैशम्पायनस्य, अङ्गानि=लघूनि

अङ्गानि अङ्गकानि क्षुद्रावयवा:,अल्पम् अपि=किञ्चिद् अपि,गन्तुम्=चलितुम्, न अलम्=न समर्थानि,आत्मन:=स्वस्यस्वशरीरस्य इत्यर्थ:,अप्रभु:=अस्वामी अस्मि=भवामि, न मे स्वदेहेऽप्यधिकारो वर्तत इत्याशय:, मे=मम, हृदयम्=चेत:, सीदति=सखेदं भवति । चक्षु:=नयनम्, अन्धकारताम्=अन्धं करोतीति अन्धकार: तस्य भाव: तत्ता तां तिमिरताम्, उपयाति=प्राप्नोति । अपि नाम=किमिदं सम्भवम्, खल:=क्रूर:, विधि:=विश्वसृट्, अनिच्छतोऽपि=अनभिलषतोऽपि, मे=मम, मरणम्=मृत्युम्, अद्यैव=अस्मिन्नेव दिने, उपपादयेत्=विदध्यात् ।

टिप्पणी-जलदेवता-जलस्य देवता, देव+तल्=देवता । अस्फुटानि-अस्पष्ट, न स्फुटानि-अस्फुटानि । उपजनयति-उप+जन्+णिच्+तिप् । पांसुपटल-धूलि का समूह । अपि नाम-क्या यह सम्भव है, क्या ही अच्छा हो । यहां अपि शब्द प्रश्नवाचक तथा नाम सम्भावना अर्थ में है । जैसा कि कहा गया है-'अपि: सम्भावनाप्रश्नशङ्कागर्हासमुच्चये । तथा भुक्तपदार्थे च कामाचार-क्रियासु च ॥' इति विश्व: । 'नाम कामे (कोपे) अभ्युपगमे विस्मये स्मरणेऽपि च । सम्भाव्यकुत्साप्राकाश्यविकल्पेपि दृश्यते ॥' इति मेदिनी ।

एव चिन्तयत्येव मयि तस्मात् सरसो नातिदूरवर्तिनि तपोवने जावालिर्नाम महातप: मुनि: प्रतिवसति स्म । तत्तनयश्च हारीतनामा मुनिकुमारक: सनत्कुमार इव सर्वविद्यावदातचेता: सवयोभिरपरैस्तपोधनकुमारकैरनुगम्यमानस्तेनैव पथा द्वितीय इव भगवान् विभावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्ति:, उद्यतो दिवसकरमण्डलादिवोत्कीर्ण:, तडिद्भिरिव रचितावयव:, तप्तकनकद्रवेणेव बहिरुपलिप्तमूर्ति आपिशङ्गावदातया देहप्रभया स्फुरन्त्या सबालातपमिव दिवसं सदावानलमिव वनमुपदर्शयन्,उत्तप्तलोहिनीनामनेकतीर्थाभिषेकपूतानामसंस्था-

वलम्बिनां जटानां निकरेणोपेतः, स्तम्भितशिखाकलापः खाण्डववन-दिधक्षया कृतकपटवटुवेष इव भगवान् पावकः,……

**हिन्दी-अनुवाद**–मेरे इस प्रकार विचार मग्न रहने पर ही उस [पम्पा] सरोवर से बहुत दूर नहीं [अपितु निकटवर्ती] तपोवन में जाबालि नाम वाले (एक) महातपस्वी मुनि रहते थे। उनका पुत्र 'हारीत' नामक मुनिकुमार स्नान करने की इच्छा से, उसी मार्ग से (जहाँ मैं था) उसी पद्मसर की ओर आया जो कि (ब्रह्मा के पुत्र) सनत्कुमार की भाँति समस्त विद्याओं (के अध्ययन) से प्रकाशित (विशुद्ध) अन्तःकरण वाला था, जो समान अवस्था वाले अन्यान्य तपस्वियों के कुमारों द्वारा अनुगमन किया जा रहा था, जो अत्यन्त तेजस्विता के कारण कठिनतापूर्वक देख सकने योग्य स्वरूप वाले द्वितीय भगवान् सूर्य के (अथवा अग्नि) की भाँति (ब्रह्मचर्यादिजनित) उत्कृष्ट तेजोमयता के कारण कठिनाईपूर्वक देखने योग्य शरीरवाला था, जो उदीयमान सूर्यमण्डल से उचेल लिया (उत्कीर्ण) गया प्रतीत होता था, जो विद्युत्समूह से विरचित अङ्ग-प्रत्यङ्गों वाला प्रतीत होता था, जो पिघले हुए सुनहरे घोल द्वारा बाहर से पुती हुई (कोई) मूर्ति प्रतीत होता था, जो चम-चमाती हुई श्वेत-पीतवर्णवाली (अपनी) निर्मल देहप्रभा से दिन को प्रभात-कालीन धूप से युक्त तथा वन को दावानल से संवलित करता हुआ प्रतीत होता था, जो धधकते हुए के समान लालरंग वाली अनेक तीर्थों के जल (स्नान) से पवित्रित तथा स्कन्धप्रदेश पर लटकती हुई जटाओं के समूह से युक्त था, जो ज्वालपुञ्ज को भीतर समेटकर खाण्डववन को भस्मसात् करने की इच्छा से कृत्रिम ब्रह्मचारी की वेशभूषा धारण करने वाले भगवान् अग्निदेव के समान बँधे हुए चूडापाश वाला था।

**संस्कृत-व्याख्या**–**मयि**=वैशम्पायने, **एवम्**=पूर्वोक्तप्रकारेण, **चिन्तयति एव**=विचारयति एव, **तस्मात्**=पूर्वोक्तात्, **सरसः**=पद्मसरोवरात्, **नातिदूर-वर्तिनि**=समीपस्थायिनि, **तपोवने**=धर्मारण्ये, **जाबालिर्नाम**=जाबालिनामकः, **महातपाः**=महत् तपः यस्य सः उग्रतपाः, **मुनिः**=मननशीलो महात्मा, **प्रति-वसति स्मः**=निवसति स्म, **तत्तनयः**=तत्सुतः, **हारीतनामा**=हारीतसंज्ञकः, **मुनिकुमारकैः**=तपस्विबालकैः **समवयोभिः**=समानं वयः आयुः येषां तैः सम-

**वयस्कैः**, **अपरैः**=इतरैः, **तपोधनकुमारकैः**=तपस्विबालकैः, **अनुगम्यमानः**=अनुस्रियमाणः, **तेनैव**=मद्गतेनैव, **पथा**=मार्गेण, सिस्नासुः तदेव कमलसरः उपागमत् इति दूरतमेन सम्बन्धः। अतः परं प्रथमान्तानि पदानि हारीतस्य विशेषणानि ज्ञेयानि। **सनत्कुमार इव**=ब्रह्मपुत्र इव, **सर्वविद्यावदातचेताः**=सर्वाभिः समस्ताभिः विद्याभिः कलाभिः अवदातं निर्मलं चेतः मनः यस्य सः, **अतितेजस्वितया**=अतिदीप्तिमत्तया, **दुर्निरीक्ष्यमूर्तिः**=दुःखेन निरीक्षितुं योग्या दुर्निरीक्ष्या दुर्लक्ष्या मूर्तिः वपुः यस्य तादृशः, **द्वितीयः**=अपरः, **भगवान्**=ऐश्वर्यवान् तेजस्वी इत्यर्थः, **विभावसुः**=वह्निः, **इव**=उत्प्रेक्षाव्यञ्जकोऽयम्, **उद्यतः**=उदयं विदधतः, **दिवसकरमण्डलात्**=दिवसं करोतीति दिवसकरः सूर्यः तस्य मण्डलात् सूर्यबिम्बात्, **उत्कीर्ण इव**=टङ्केन उल्लिखित इव, सूर्यबिम्बम् उल्लिख्य विरचित इत्यर्थः, **तडिद्भिः**=सौदामिनीभिः, **विरचितावयव इव**=विरचिताः निर्मिताः अवयवाः अङ्गानि यस्य तादृश इव, **तप्तकनकद्रवेण**=तप्तम् उष्णीकृतं यत् कनकं स्वर्णं तस्य द्रवः रसः तेन, **बहिरुपलिप्तमूर्तिः इव**=बहिःबाह्यभागे उपलिप्ता लिम्पिता मूर्तिः वर्ष्म यस्य तादृश इव, **आपिशङ्गावदातया**=आ ईषत् पिशङ्गा पीतवर्णा चासौ अवदाता स्वच्छा तया, **स्फुरन्त्या**=देदीप्यमानया, **देहप्रभया**=देहस्य शरीरस्य प्रभा छविः तया शरीरकान्त्या, **सबालातपम्**=बालः प्रभातकालिकः आतपः तेजः बालातपः तेन सह विद्यमानं प्रातःकालिकप्रकाशसहितम्, **दिवसम् इव**=वासरम् इव, **सदावानलम्**=दवस्य अयं दावः स चासौ अनलः दावानलः तेन सह विद्यमानं दावाग्निसहितम्, **वनम् इव**=विपिनम् इव, **उपदर्शयन्**=प्रकटयन्, **उत्तप्तलोहलोहिनीनाम्**=उत्तप्तम् उष्णीकृतं लोहम् अश्मसारः तद्वत् लोहिनीनां रक्तवर्णानाम्, **अनेकतीर्थाभिषेकपूतानाम्**=अनेकानि विविधानि यानि तीर्थानि तरणोपायभूतानि गङ्गादीनि तेषु अभिषेकः स्नानं तेन पूतानाम् पवित्राणाम्, **अंसस्थलावलम्बिनीनाम्**=अंसस्थलयोः भुजशिरःस्थाने अवलम्बन्ते वेल्लन्ति इति तच्छीलाः तासाम्, स्कन्धावलम्बिनीनाम्, **जटानाम्**=सटानाम्, **निकरेण**=समूहेन, **उपेतः**=युक्तः, **स्तम्भितशिखाकलापः**=स्तम्भितः बद्धः निश्चलीकृतो वा शिखानां चूडानां कलापः समूहः येन तादृशः बद्धचूडासमूहः, अग्निपक्षे निश्चलीकृतज्वालासमूहः, **खाण्डववनविवक्षया**=खाण्डव

च तद् वनं खाण्डववनं तन्नामकं काननं तस्य दिधक्षया, **कृतकपटवटुवेष:**=कृतः विहितः कपटेन व्याजेन वटोः ब्रह्मचारिणः वेषः स्वरूपरचना आकल्पो वा येन सः तादृशः, **भगवान्**=ऐश्वर्यवान्, **पावक इव**=वह्निरिव ।

**टिप्पणी–चिन्तयति**–चिति+णिच्+शतृ; स० ए० व० । **महातपाः**—महत् तपः यस्य सः=महातपाः । **सनत्कुमार इव···चेताः**–ब्रह्मा के पुत्र सनत्कुमार के ही समान सब विद्याओं के अध्ययन के कारण जिसका मन निर्मल हो गया था । 'सनत्-सदा कुमारः' इस व्युत्पत्ति के आधार पर सनत्कुमार चिरकुमार कोटि में गिने जाते हैं—"यथोत्पन्नस्तथैवाहं कुमार इति विद्धि माम् । तस्मात् सनत्कुमारेति नामैतन्मे प्रतिष्ठितम् ॥" **अनुगम्यमानः**—अनु+गम्+यक्+शानच् । **तेजस्वितया**—तेजस्+विनि+तल्+टाप्; तृ० ए० व० । **उत्कीर्ण इव**—टाँकी से छीलकर बनाया गया । 'सुवर्णात् कटकम्' प्रयोग की तरह यहाँ दिवसकरमण्डलात्' में पञ्चमी विभक्ति है । सूर्य को गढ़कर ही मानों इस तेजस्वी मुनिकुमार को रचा गया हो; उत्+कृ+क्त । **उपलिप्त**–उप+लिप्+क्त । **स्फुरन्त्या**–स्फुर्+शतृ+ङीप्; तृ० ए० व० । **उपदर्शयन्**–उप+दृश्+णिच्+शतृ, प्र० ए० व० । **खाण्डववन···पावकः**—खाण्डव वन को जलाने की इच्छा से ब्रह्मचारी का कपट वेष बनाकर मानो भगवान् अग्निदेव ही आ गये हों । महाभारत के अनुसार श्वेतिक नामक राजा ने बारह वर्ष तक लगातार यज्ञ करके अग्नि को इतना तृप्त किया कि उसे मन्दाग्नि हो गयी । उसे दूर करने के लिए ब्रह्मा जी की आज्ञा से खाण्डव वन का दाह करने की इच्छा से अग्निदेव ब्रह्मचारी का वेष बनाकर अर्जुन के पास आये थे और अर्जुन ने श्रीकृष्ण की सहायता से अग्निदेव को पूर्ण रूप से परितृप्त किया था । '**कृतकपट···पावकः**' में उपमा अलङ्कार है ।

तपोवनदेवतानूपुरानुकारिणा धर्मशासनकटकेनेव स्फाटिकेनाक्षवलयेन दक्षिणश्रवणावलम्बिना विराजमानः, सकलविषयोपभोगनिवृत्त्यर्थमुपपादितेन ललाटपट्टके त्रिसत्येनेव भस्मत्रिपुण्ड्रकेणालंकृतः, गगनगमनोन्मुखबलाकानुकारिणा स्वर्गमिव दर्शयता सततमु-

दग्रीवेण स्फटिकमणिकमण्डलुनाध्यासितवामकरतलः, स्कन्धदेशावलम्बिना कृष्णाजिनेन नीलपाण्डुभासा तपस्तृष्णानिपीतेनान्तर्निष्पतता धूमपटलेनेव परीतमूर्तिः, अभिनवबिससूत्रनिर्मितेमेव परिलघुतया पवनलोलेन निर्मांसविरलपार्श्वकपञ्जरमिव गणयता वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानः, देवतार्चनार्थमागृहीतवनलताकुसुमपरिपूर्णपर्णपुटसनाथशिखरेणाषाढदण्डेन व्यापृतसव्येतरपाणिः, विषाणशिखरोत्खातामुद्वहता स्नानमृदमुपजातपरिचयेन नीवारमुष्टिसंवर्धितेन कुशकुसुमलताग्रास्यमानलोलदृष्टिना तपोवनमृगेणानुगम्यमानः,……

**हिन्दी-अनुवाद**–जो तपोवन देवता की पैंजनी (पायल) का अनुकरण करने वाली–धर्मादेशों का समूह प्रतीत होने वाली (अथवा धर्ममय शासन कराने में नियुक्त सेना की भाँति) तथा दाहिने कान में लटकती हुई स्फटिकमणिनिर्मित जपमाला से शोभायमान था, जो समस्त सांसारिक भोगों से छुटकारा पाने के लिए (नाना प्रयत्नों से) प्राप्त किए गए ललाटस्थली पर (मन, वाणी एवं कार्य सम्बन्धी) तीन सत्यों की भाँति प्रतीत होने वाले–भस्मनिर्मित त्रिपुण्ड्र से अलंकृत था जो नभोमण्डल में विहार करने के लिए ऊर्ध्वमुखी बकपंक्ति का अनुकरण करने वाले—निरन्तर ऊपर उठी ग्रीवा वाले (अतएव) मानो स्वर्गलोक के मार्ग का सङ्केत करते हुए स्फटिकमणिनिर्मित कमण्डलु से सुशोभित बाएँ हाथ वाला था, जो स्कन्धप्रदेश पर लटकते हुए-नीली एवं पीली प्रभा से युक्त काले मृगचर्म से (इस प्रकार) परिवेष्टित शरीरवाला था जो मानो तप के लोभ से (पहले) पिया गया और (अब) भीतर से निकलता हुआ धूमपुञ्ज हो, जो नवीन कमलनाल के तन्तुओं से बना हुआ प्रतीत होने वाले और भारहीन होने के कारण वायुवेग से चञ्चल होकर (अर्थात् देह पर इधर-उधर झूलता हुआ) मानो (हारीत की) मांसविहीन एवं छितराई हुई पसलियों को गिनने वाले, कन्धे पर लटकते हुए यज्ञोपवीत से देदीप्यमान था,

जो देवार्चन के निमित्त चुने गये वन की लताओं के पुष्पों से परिपूर्ण पत्रपुट (दोने) से संयुक्त शिखर वाले पलाशदण्ड से भरे हुए दाहिने हाथ वाला था, जो सींगों के अग्रभाग से उखाड़ी गई स्नानोपयोगी मिट्टी को (सींगों में ही) लपेटे हुए, परिचय उत्पन्न हो जाने के कारण जङ्गली धान की मुट्ठियों (को खिलाने) से पाले-पोसे गए तथा कुशों-लताओं एवं फूलों से दुःखती हुई चञ्चल दृष्टियों वाले तपोवनमृग से अनुगमन किया जा रहा था।

**संस्कृत-व्याख्या–तपवोनदेवतानूपुरानुकारिणा** = तपवनदेवीचरणकटक--सदृशेन, **धर्मशासनकटकेन इव**=धर्मशासनं राजभिः विप्रेभ्यः दत्तं ताम्रपत्रं तस्य कटकं ताम्रकुण्डलं तेन इव, **दक्षिणश्रवणावलम्बिना**=दक्षिणे सव्येतरे श्रवणे श्रोत्रे अवलम्बते वेल्लति इति तच्छीलः तेन, **स्फाटिकेन**=स्फटिकमणि-निर्मितेन, **अक्षवलयेन**=अक्षमालया, **विराजमानः**=शोभमानः, **सकलविषयोप-भोगनिवृत्त्यर्थम्**=सकलाः समस्ताः ये विषयाः इन्द्रियार्थाः तेषाम उपभोगः सेवनं तस्मात् निवृत्यर्थं विरक्त्यर्थम्, **उपपादितेन**=विहितेन, **त्रिसत्येन इव**=त्रयाणां सत्यानां समाहारः त्रिसत्यं तेन मानसिकवाचिककायिकसत्यत्रयेण इव, **ललाटपट्टके**=भालफलके, **भस्मत्रिपुण्ड्रकेण**=भस्मनः विभूतेः त्रिपुण्ड्रकं तिलक-विशेषः तिर्यग्रेखात्रयात्मकः तेन, **अलंकृतः**=सुशोभितः **गगनगमनोन्मुखबलाका-नुसारिणा**=गगनगमनाय आकाशोड्डयनाय उन्मुखी ऊर्ध्वानना या बलाका बकाङ्गना ताम् अनुसरति अनुकरोति इति तच्छीलः तेन तादृशेन, **स्वर्गमार्गम् इव**=सुरलोकपथम् इव, **दर्शयता**=निर्दिशता, **सततम्**=निरन्तरम् **उदग्रीवेण**=उन्नतकन्धरेण, **स्फटिकमणिकमण्डलुना**=स्फाटिककुण्ड्या, **अध्यासितवाम-करतलः**=अध्यासितम् अवलम्बितं वामं सव्यं करतलं हस्ततलं यस्य सः, **स्कन्धदेशावलम्बिना**=स्कन्धदेशम् असंस्थलम् अवलम्वते आश्रयते इति तच्छीलं तेन, **नीलपाण्डुभासा**=नीला श्यामा पाण्डुः पीता च भाः कान्तिः यस्य तेन तादृशेन, **कृष्णाजिनेन**=कृष्णमृगचर्मणा, **तपस्तृष्णानिपीतेन**=तपसः तप-स्यायाः तृष्णा आकाङ्क्षा तया हेतुभूतया निपीतेन निगीर्णेन, **पश्चाच्च अन्त-र्निष्पतता**=अन्तः अभ्यन्तरात् निष्पतता बहिर्निर्गच्छता, **धूमपटलेन इव**=धूम-समुदायेन इव, **परीतमूर्तिः**=परीता व्याप्ता मूर्तिः विग्रहः यस्य तादृशः, **अभिनव-**

**बिससूत्रनिर्मितेन इव**=अभिनवानि प्रत्यग्राणि यानि बिससूत्राणि मृणालतन्तवः तैः निर्मितेन इव कृतेन इव, **परिलघुतया**=भारशून्यतया, **पवनलोलेन**=पवनेन वातेन लोलः चञ्चलः तेन, अतएव **निर्मांसविरलपार्श्वकपञ्जरम्**=निर्मांसं पिशितशून्यं विरलम् असंकीर्णं पार्श्वकपञ्जरं पार्श्वास्थिनिकरम्, **गणयता इव**= गणनां कुर्वता इव, **वामांसावलम्बिना**=वामं सव्यं अंसं स्कन्धम् अवलम्बते आश्रयते इति तच्छीलं तेन, **यज्ञोपवीतेन**=यज्ञसूत्रेण, **उद्भासमानः**=देदीप्यमानः, **देवतार्चनार्थम्**=देवपूजनार्थम्, **आगृहीतवनलताकुसुमपरिपूर्णपर्णपुटसनाथशिखरेण**=आगृहीतानि आत्तानि यानि वनलतानां काननवल्लीनां कुसुमानि प्रसूनानि तैः परिपूर्णेन भृतेन पर्णपुटेन पत्रसंपुटकेन सनाथं युक्तं शिखरम् अग्र-भागः यस्य स तेन तादृशेन, **आषाढदण्डेन**=पालाशलगुडेन, **व्यापृतसव्येतरपाणिः**=व्यापृतः संयुक्तः सव्याद् इतरः सव्येतरः दक्षिणः पाणिः हस्तः यस्य स तादृशः, **विषाणशिखरोत्खाताम्**=विषाणस्य शृङ्गस्य शिखरेण अग्रेण उत्खाताम् उत्खनिताम्, **स्नानमृदम्**=स्नानार्थं स्नानात्पूर्वं मर्दनार्थे या मृत् मृत्तिका ताम्, **उद्वहता**=धारयता, **उपजातपरिचयेन**=उपजातः समुत्पन्नः परिचयः संस्तवः यस्य तेन उपजातपरिचितेन, अत एव **नीवारमुष्टिसंवर्धितेन** =नीवाराणां मुनिधान्यविशेषाणां मुष्टिभिः मुष्टिपरिमिताभिः मात्राभिः संवर्धितेन वृद्धि प्रापितेन, **कुशकुसुमलतायास्यमानलोलदृष्टिना**=कुशाः दर्भाः, कुसुमानि पुष्पाणि, लताः व्रततयः तैः आकर्षणहेतुभूतैः आयास्यमाना खेदं प्राप्यमाणा लोला चञ्चलाः दृष्टिः दर्शनं यस्य तेन तादृशेन, **तपोवनमृगेण**=मुन्याश्रमहरिणेन, **अनुगम्यमानः**=अनुव्रज्यमानः ।

**टिप्पणी-धर्मशासनकटकेन इव**—ताम्रपत्रों में विद्यमान कटक (कड़े) के समान । राजाओं के द्वारा ब्राह्मणों को जो भूमि दान आदि के प्रमाणरूप में ताम्रपत्र दिये जाते थे उन पर धार्मिक उपदेश भी रहा करते थे, अतः उन्हें धर्मशासन कहा जाता था । ताम्रपत्रों के ऊपरी भाग में एक ताँबे का मोटा कटक (कड़ा) डाला जाता था । जिस पर राजमुद्रा अङ्कित रहती थी, उसे धर्मशासन कटक कहा जाता था । हारीत के कान पर लटकती हुई माला उस कड़े के समान ही घेरे वाली थी । **विराजमान**–वि + राज् + शानच् । **त्रिसत्ये**

**इव**—हारीत के मस्तक पर लगी हुई भस्म का त्रिपुण्ड्र उस त्रिसत्य के समान था जो विषयों के उपभोग से मन को हटाने के लिए उसने 'मैं विषयों में अनुरक्त नहीं होऊँगा' इस सत्य को तीन बार शपथ के रूप में स्वीकार किया था। अथवा 'त्रिसत्या वै देवाः' इस वैदिक कल्पना के आधार पर मनसा, वाचा, कर्मणा विषयनिवृत्ति के लिए किया गया त्रिविध संकल्प ही 'त्रिसत्य' कहलाता है। **अलंकृत**—अलं + कृ + क्त । **दर्शयता**—दृश् + णिच् + शतृः तृ० ए० व० । **परीत**—परि + इण् + क्त । **उद्भासमान**—उत् + भास् + शानच् । **आषाढदण्ड**—ढाक का दण्ड । 'पलाशो दण्ड आषाढः' इत्यमरः । **'धूमपटलेनेव'** में जात्युत्प्रेक्षा है । **अनुगम्यमान**—अनु + गम् + यक् + शानच् ।

विटप इव कोमलवल्कलावृतशरीर, गिरिरिव समेखल, राहुरिवासकृदास्वादितसोम, पद्मनिकर इव दिवसकरमरीचिप, नदीतटतरुरिव सततजलक्षालनविमलजटः, करिकलभ इव विकचकुमुददलशकलासितदशनः, द्रौणिरिव कृपानुगतः, नक्षत्रराशिरिव चित्रमृगकृत्तिकाश्लेषोपशोभितः, घर्मकालदिवस इव क्षपितदोषः, जलधरसमय इव प्रशमितरजःप्रसरः, वरुण इव कृतोदवासः, हरिरिवापनीतनरकभयः, प्रदोषारम्भ इव संध्यापिङ्गलतारकः, प्रभातकाल इव बालातपकपिलः, रविरथ इव दृढनियमिताक्षचक्रः, सुराजेव निगूढमन्त्रसाधनक्षपितविग्रहः, जलनिधिरिव करालशंखमण्डलावर्तनाभिगतः, भगीरथ इव दृष्टगङ्गावतारः, भ्रमर इवासकृदनुभूतपुष्करवनवासः, वनचरोऽपि कृतमहालयप्रवेश, असंयतोऽपि मोक्षार्थी, सामप्रयोगपरोऽपि सततावलम्बितदण्डः, सुप्तोऽपि प्रबुद्धः, संनिहितनेत्रद्वयोऽपि परित्यक्तवामलोचनस्तदेव कमलसरः सिस्नासुरुपागमत् ।

**हिन्दी-अनुवाद**—जो कोमल छालों (तरुत्वक्) से ढँकी शरीर वाले तने (युक्त वृक्ष) की भांति कोमल वल्कल (वस्त्रविशेष) से आवृत शरीर वाला

था, जो मेखलाओं (पत्तों अथवा प्रत्यन्त शिखरों) से युक्त पर्वत की भाँति (मौञ्जी) मेखला से युक्त था, जो अनेक बार चन्द्रमा को संग्रस्त करने वाले राहु की भाँति अनेक बार सोमरस का आस्वादन कर चुका था (अथवा अनेक बार ज्योतिष्टोम याग कर चुका था), (विकासार्थ) सूर्य की किरणों का पान करने वाले कमलसमूह की भाँति (ऊर्ध्वमुख होकर) सूर्य की रश्मियों का पान करने वाला था, जो निरन्तर लहरों से धोए जाने के कारण निर्मल मूल-भाग वाले नदी तटवर्ती वृक्ष की भाँति सदैव जल से धोने के कारण स्वच्छ जटाओं वाला था जो खिले हुए कुमुदपुष्प की पंखुड़ियों के टुकडों की भाँति शुभ्र दातों वाले हस्तिशावक की भाँति विकसित कुमुदपुष्प के दलखण्डों की भाँति शुभ्र दाँतों वाला था, जो (अपने मामा) कृपाचार्य से अनुगत द्रोणपुत्र अश्वत्थामा की भाँति अनुग्रहयुक्त था, जो चित्रा-मृगशिरा-कृत्तिका तथा आश्लेषा समन्वित नक्षत्रमण्डल की भाँति चितकबरे मृगचर्म को लपेटने (ओढने) से सुशोभित था, जो रात्रि को क्षीण (अर्थात् छोटी) बना देने वाले ग्रीष्मकालीन दिन की भाँति (रागद्वेषादि) दोषों को नष्ट कर चुका था, जो धूलिसञ्चार का प्रशमन कर देने वाली पावस ऋतु की भाँति (कामादि) रजोगुण-व्यापार को शान्त कर चुका था, जो जल में निवास करने वाले (तदधिष्ठातृ) वरुणदेव की भाँति (तपश्चर्या के लिए) जल में निवास कर चुका था अथवा 'उपवास' (व्रत-विशेष) सम्पन्न कर चुका था, जो नरकासुर के भय को दूर कर देने वाले भगवान् विष्णु की भाँति (समाचरित पुण्यों के कारण) नरलोक का भय दूर कर चुका था, जो सान्ध्यकालीन पिङ्गलवर्ण नक्षत्रों से युक्त प्रदोषारम्भ (गोधूलिवेला का प्रारम्भ) की भाँति सन्ध्या सदृश पिङ्गलवर्ण नेत्रकनीनिका (पुतली) वाला था, जो उदीयमान सूर्य की धूप के कारण पियराए प्रभातकाल की भाँति नूतन सूर्यप्रभा के समान कपिलवर्ण था, जो सुदृढरूप में कीलित (लगाए गए) धुरी एवं चक्के से युक्त सूर्य के रथ की भाँति सुदृढरूप से नियन्त्रित इन्द्रिय समूह वाला था, जो अत्यन्त गोपनीय मंत्रणाओं एवं साधनों (गजाश्वादि सैन्यों) से युद्धों को शान्त कर देने वाले प्रतापी नरेश की भाँति अत्यन्त गोपनीय मन्त्रसाधना (देवाराधनक्रिया) के (अभ्यास के) कारण कुशलता को प्राप्त

हुये शरीर वाला था, जो अगाध प्रदेशों ( =गर्तों में विद्यमान 'कराल शंखमंडलों' (अर्थात् कराल=विशाल तथा टेढ़ी मेढ़ी आकृति वाले १६ लकीरों वाले शंखों का समूह) तथा आवर्तों ( =जल के भँवरों) से युक्त समुद्र की भाँति विशाल अथवा उच्चावच शंखों के मण्डलावर्त (अर्थात् क्रमशः नीचे उतरी हुई वृत्ताकार भ्रमि रेखा) के समान 'गर्त' (नाभिच्छिद्र) वाला था, जो भगवती गंगा का अवतरण प्रत्यक्षीकृत करने वाले (महाराज) भगीरथ की भाँति गंगा के स्नान को देख चुका था, जो कमलवन में निवास करने का अनेकशः अनुभव किये हुए भ्रमर की भांति जल अर्थात् संवलित वन में रहने का बारम्बार अनुभव कर चुका था (अथवा 'पुष्कर' तीर्थ तथा वन मे रहने का अनेकशः अनुभव कर चुका था), जो वन में सञ्चरण करने वाला होकर भी 'महालयों' अर्थात् विशाल अट्टालिकाओं में प्रवेश कर चुका था, जो 'असंयत' अर्थात् उच्छृङ्खल अथवा असमाहित होकर भी मोक्ष का अभिलाषी था जो, 'साम' अर्थात् मधुर वचनों के प्रयोग में तत्पर होता हुआ भी निरन्तर डंडे का सहारा लिये था (अथवा सामनीति=मैत्रीनोति के प्रयोग का पक्षधर होकर भी सदैव दण्डनीति का आश्रय लेता था), जो सोता हुआ भी जगा हुआ (जाग्रद-वस्था वाला) था तथा जो नेत्रद्वय के विद्यमान रहते हुए भी वामनेत्र सुन्दरियों) का परित्याग कर चुका था ।

**संस्कृत-व्याख्या-विटपः इव**=तरुशाखा इव, **कोमलवल्कलावृतशरीरः**= कोमलेन मृदुलेन, वल्कलेन पादपत्वचा आवृतम् आच्छादितं शरीरं वपुः यस्य स तादृशः, **गिरिः इव**=पर्वत इव, **समेखलः**=मेखला मौञ्जी तया सह विद्य-मानः, पर्वंताक्षे मेखला शैलनितम्बः मध्यमभागः इत्यर्थः तया सह वर्तमानः, **राहुः इव**=सैंहिकेय इव, **असकृद्**=बहुबारम्, **आस्वादितसोमः**=आस्वादितः पीतः सोमः सोमरसः यज्ञेषु येन सः, पक्षे आस्वादितः ग्रस्तः सोमः हिमांशुः येने-त्यर्थः, **पद्मनिकरः इव**=कमलसमूहः इव, **दिवसकरमरीचिपः**=दिवसकरः भास्करःतस्य मरीचीन् किरणान् पिबति पञ्चाग्निसाधनात्मके यज्ञे इति भावः पक्षे स्वविकासाय दिवसकरमरीचीन् पिबति स्पृशति, कमलानां सूर्यकिरणस्पर्शेन विकासप्रसिद्धेः । **नदीतटतरुः इव**=नद्याः सरितः तटे तीरे तरुः पादपः स इव,

**सततजलक्षालन–विमलजटः** = सततं निरन्तरं जलक्षालनेन-स्नानकाले सलिल-धावनेन विमलाः निर्मलाः जटाः सटाः यस्य सः पक्षे सततं निरन्तरं जलक्षालनेन स्रोतः सलिलप्रक्षालनेन विमला जटा मूलप्रदेशः यस्य इत्यर्थः, **करिकलभः इव** = हस्तिशावकः इव, **विकचकुमुददलशकलसितदशनः** = विकचानि विकसितानि यानि कुमुददलानि कैरवपत्राणि तेषां शकलानि खण्डानि तद्वत् सिताः श्वेताः दशनाः दन्ताः यस्य सः, पक्षे सितौ शुभ्रौ दशनौ दन्तौ यस्यः स शेषं प्राग्वत्, उभयत्रापि साम्यात् । **द्रौणिः इव** = द्रोणसुतः अश्वत्थामा इव । **कृपानुगतः** = कृपा परदुःखनाशेच्छा तया अनुगतः संयुक्तः पक्षे कृपेण कृपाचार्येण स्वमातुलेन अनुगतःसंयुक्तः, **नक्षत्रराशिः इव** = नक्षत्राणाम् अश्विनीप्रभृतीनां राशिः समूहः स इव, **चित्रमृगकृत्तिकाश्लेषोपशोभितः** = चित्रमृगः कृष्णसारःतस्य कृत्तिका चर्म तस्याः आश्लेषेण आसङ्गेन उपशोभितः विराजितः, पक्षे चित्रनामकं नक्षत्रं मृगं मृगशिराः कृत्तिकाः एतदाख्यं तृतीयं नक्षत्रं श्लेषा आश्लेषा वा एतदाख्यं नवमं नक्षत्र तैः उपशोभितः सुशोभितः,**घर्मकालदिवसः इव** = घर्मकालः ग्रीष्मर्तुः तस्य दिवसः वासरः स इव, **क्षयितदोषः** = क्षयः संजातो येषां ते क्षयिताःक्षीणाः दोषाः कामक्रोधादयः यस्य सः, पक्षे क्षयिता क्षीणतां प्राप्ता दोषा निशा यस्य स तादृशः, **जलधरसमयः इव** = जलधराः जलदाः तेषां समयः प्रावृट्काल स इव, **प्रशमितरजः प्रसरः** = प्रशमितःशान्तिं प्रापितः रजसः रजोगुणस्य प्रसरः व्यापारः येन सः, पक्षे प्रशमितः रजसां रेणूनां प्रसरः विस्तारः यत्र तादृशः, **वरुणः इव** = प्रचेता इव, **कृतोदवासः** = कृतः विहितः उदके जले वासः निवासः उदवासः जलनिवाराः येन सः व्रताचरणादत्र जलवासः पक्षे जलाधिपतित्वात्, **हरिः इव** = विष्णु इव, **अपनीतनरकभयः** = अपनीतं दूरीकृतं नरकस्य निरयस्य भयं साध्वसं येन सः, पक्षे अपनीतं दूरीकृतं नरकस्य तदाख्यस्य असुरस्य भयं येन सः, नरका-सुरवधादित्यर्थः, **प्रदोषारम्भःइव** = प्रदोषस्य रजनीमुखस्य आरम्भः प्रारम्भ स इव, **सन्ध्यापिङ्गलतारकः** = संध्यावत् दिवसरजन्योः सन्धिकालवत् पिङ्गले पीत-वर्णे तारके कनीनिके यस्य सः,पक्षे संध्यया सन्ध्यावर्णेन पिङ्गला पीताः तारका नक्षत्राणि यत्र सः, **प्रभातकालः इव** = प्रभातं प्रत्यूषः तस्य कालः समयः स इव, **बालातपकपिलः** = बालातपःसूर्यस्य नवीन प्रकाशःतद्वत् कपिलःपीतरक्तवर्णःपक्षे

बालातपेन सूर्यप्रकाशेन कपिलः, **रविरथः इव**=रवेः सूर्यस्य रथः स्यन्दनः स इव, **दृढनियमिताक्षचक्रः**=दृढं कठोरं यथा स्यात् नियमितं निगृहीतम् अक्षाणाम् इन्द्रियाणां चक्रं समूहः येन सः पक्षे दृढं कठिनं यथा स्यात्तथा नियमिते निबद्धे अक्षश्चक्रे यस्य सः, अक्षं मध्यभागः चक्रं रथाङ्गम्, **सुराजा इव**=सुनृपः इव, **निगूढमन्त्रसाधनक्षपितविग्रहः**=निगूढं अतिगुप्तं यत् मन्त्र-साधनं स्वेष्टदेव-मन्त्रसिद्धिः तेन क्षपितः क्षयं प्रापितः विग्रहः शरीरं मन्त्रेण येन सः, व्रताद्या-चरणादिति भावः, पक्षे निगूढेन सुगुप्तेन मन्त्रणया साधनेन सैन्येन च क्षपितः क्षयं प्रापितः विग्रहः युद्धं, युद्ध—सम्भावनेत्यर्थः, येन सः । **जलनिधि इव**= सागरः इव, **करालशंखमण्डलावर्तनाभिगर्तः**=करालः विशालः यः शंखः कम्बुः तस्य मण्डलावर्तः मण्डलाकारभ्रमिरेखा तद्वत् नाभिगर्तः नाभिविविरं यस्य सः, पक्षे करालशंखः विशालशंखः मण्डलावर्तः मण्डलाकारो जलभ्रमः च नाभिगर्त इव, नाभिच्छिद्रम् इव यस्मिन् सः,**भगीरथ इव**=दिलीपपुत्रःसूर्यवंश्यो नृपः इव **दृष्टगङ्गावतारः**=दृष्टः विलोकितःगङ्गायाः भागीरथ्याःअवतारःअव-तरणभूमिः येन सः, पक्षे दृष्टः गङ्गायाः अवतारः स्वर्गाद् अवरोहणं येन सः, **भ्रमरः इव**=मधुपः इवः, **असकृत**=बहुशः, **अनुभूतपुष्करवनवासः**=अनुभूतः तपस्यार्थम् अनुभवविषयीकृतः पुष्करस्य एतन्नामकतीर्थस्य वने जले वासःस्थितिः येन स तादृशः अथवा पुष्करे तीर्थे वने विपिने च वासः येन सः, **वनचरोपि**= वने कानने चरित भ्राम्यति इति वनचरः वासी सन् अपि, **कृतमहालयप्रवेशः** =कृतः विहितः महालये महाँश्चासौ आलयः महालयःतस्मिन् प्रासादे प्रवेशः अन्तर्वासः येन सःइति विरोधः,तत्परिहाराय कृतः विहितः महालये परमात्मनि मोक्षे वा प्रवेशः गतिः येनेत्यर्थः । **असंयतोऽपि**=अबद्धोऽपि,**मोक्षार्थी**=बन्धन-मुक्तिकामः, अत्र विरोधः तत्परिहारस्तु मोक्षार्थी—परमपुरुषार्थरूपमुक्तिकामः इत्यर्थकरणात्, **समाप्रयोगपरोऽपि**=साम सान्त्वनं प्रथमोपायः तस्य प्रयोगे अनुष्ठाने परः परायणोऽपि,**सततावलम्बितदण्डः**=सततं निरन्तरम् अवलम्बितः आश्रितः दण्डः नियमनं तुरीयोपायः येन सः, अत्र विरोधः तत्परिहारस्तु साम तृतीयवेदः तत्प्रयोगपरः सततम् अवलम्बितः आश्रितः दण्डः पालाशदंडः येन तादृशः इत्यर्थकरणात्, **सुप्तोऽपि**=निद्रितोऽपि, **प्रबुद्धः**=बुद्धः, अत्र विरोध-

परिहाराय सुप्तः सांसारिकविषयेषु प्रबुद्धः परमात्मविषयकज्ञाने इत्यर्थः । अथवा सुप्तः सुशोभनाः सप्ताः जटाः यस्य तादृशः सुजटोऽसौ प्रबुद्धः ज्ञानीत्यर्थः, **संनिहितनेत्रद्वयोऽपि** = सनिहितं सम्यक् स्थापितं नेत्रद्वयं चक्षुयुगलं येन सः तादृशः सन्नपि, **परित्यक्तवामलोचनः** = परित्यक्तं दूरीकृतं वामलोचनं सव्यनयनं येन सः अत्र विरोधः, तत्परिहारस्तु परित्यक्ताः दूरीकृताः वामलोचना सुन्दर्यः येन सः इत्यर्थकरणात् । एवं गुणविशिष्टो **हारितनामा मुनिकुमारकः सिस्नासुः** = स्नातुमिच्छुः, **पम्पाभिधानं** = पम्पासंज्ञकं, **कमलसरः** = पङ्कजमयसरोवरम्, **उपागमत्** = प्राप्तवान् ।

**टिप्पणी**—**आवृत**—आ + वृ + क्त । **मेखला**—मूँज की बनी हुई मेखला, पर्वतनितम्ब । **जटा**—तपस्वियों के केश, वृक्षों की जड़ । **रजः**—रजोगुण, धूलि । **संध्यापिङ्गलतारकः**—सन्ध्या के समान पीले वर्ण की पुतलियों वाला, सन्ध्या के कारण पीले नक्षत्रों वाला । सामुद्रिकशास्त्र के अनुसार—'क्षुद्रोऽपि चक्रवर्ती स्यात् पीततारकचक्षुषि' । पीली पुतलियों वाला महापुरुष समझा जाता है । **विग्रह**—शरीर, युद्ध । **करालशंखवर्तः**—विशाल शंख के मण्डलाकार घुमाव की भांति नाभिवाला, नाभि के सदृश विशाल शंख और मडलाकार जलावर्त वाला । **पुष्करवनवासः**—पुष्कर तीर्थ के जल में निवास, पुष्कर तीर्थ में और वन में निवास, पुष्कर (जल) युक्त वन में निवास; कमलवन में निवास यहाँ । 'विटप इव' से 'भ्रमर इव' तक पूर्णोमालङ्कार है । 'वनचर...लोचनः' में विरोधाभास है ।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि । यतः स मां तदवस्थमालोक्य समुपजातकरुणः समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत्—'अयं कथमपि शुकशिशुरसंजातपक्षपुट एवं तरुशिखरादस्मात् परिच्युतः । श्येनमुखपरिभ्रष्टेन वानेन भवितव्यम् । तथाहि—अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोऽयमामीलितलोचनो मुहुर्मुहुर्मुखेन पतति, मुहुर्मुहुरत्युल्बणं श्वसिति मुहुर्मुहुश्चञ्चुपुटं विवृणोति, न शक्नोति शिरोधरां धारयितुम् ।

तदेहि । यावदेवायमसुभिर्न विमुच्यते तावदेव गृहाणेमम्, अवतारय सलिलसमीपम्, इत्यभिधाय तेन मां सरस्तीरमनाययत् ।

**हिन्दी-अनुवाद**—प्राय: महापुरुषों के चित्त सर्वदा नि:स्वार्थभाव से हितैषी तथा अतिशय करुणा (परदु:खप्रहाणेच्छा) से आर्द्र होते है। क्योंकि वह (मुनिकुमार हारीत) मुझे उस अवस्था वाला अर्थात कष्टदशापन्न देखकर, करुणाविष्ट होकर निकटवर्ती (बहुतों में से) एक ऋपिकुमार से बोला—"यह सुग्गे का बच्चा पंखे न उगे होने के कारण ही इस वृक्ष की चोटी से यथाकथञ्चित् (नीचे) गिर पड़ा है अथवा बाजपक्षी के मुख से इसे छूटा हुआ होना चाहिए! देखो न, गिरने की अत्यधिक दूरी (ऊँचाई) होने के कारण अल्पमात्र अवशिष्ट जीवन वाला यह (पक्षी) आँखे बन्द किए बार-बार मुँह के बल गिर रहा है, बार-बार अत्यन्त विकट साँसे ले रहा है, बार-बार चञ्चुपुट (चोंच) खोल रहा है तथा ग्रीवाभाग को धारण करने में समर्थ नहीं हो पा रहा है। इसलिए आओ, जब तक कि यह प्राणों से विमुक्त न हो जाय उसके पर्व ही "इसको उठा लो और पानी के पास उतारो।" इस प्रकार कह कर (ऋषिकुमार हारीत ने) उस ऋषिपुत्र द्वारा मुझे सरोवर के तट पर पहुँचाया।

**संस्कृत व्याख्या**—**खलु**=निश्चयेन, **सताम्**=सत्पुरुपाणाम्, **चेतांसि**= हृदयानि, **प्रायेण**=बाहुल्येन, **अकारणमित्राणि**=अकारणेन हेतुं विना मित्राणि स्नेहकारीणि, **सदा**=सर्वदा, च=समुच्चयार्थकमिदमव्ययपदम्, **अतिकरुणार्द्राणि** =अतिकरुणा अतिशयेन परदु:खविनाशेच्छा तया आर्द्राणि सरसानि, कोमलानीत्यर्थ:, **भवन्ति**=वर्तन्ते, **यत:**=यस्मात् कारणात् **स:**=मुनिकुमार: हारीत:, **माम्**=वैशम्पायनम्, **तदवस्थं**=सा दयनीया अवस्था दशा यस्य तादृशम्, **आलोक्य**=विलोक्य, **समुपजातकरुण:**=समुपजाता समुत्पन्ना करुणा दया यस्य तादृश: सन् **समीपवर्तिनम्**=निकटस्थम् **अन्यतमम्**=एकतमम्, **ऋषिकुमारकम्**=तपस्विबालकम् **अब्रवीत्**=जगाद, **अयम्**=पुरो दृश्यमान:, **शुकशिशु:**=कीरडिम्भ:, **असंजातपक्षपुट: इव**=असंजातम् अनुत्पन्नं पक्षपुटं पतत्रसंपुटं यस्य तादृश:इव, **कथमपि**=केनापि हेतुना, **अस्मात्**=पुरो दृश्यमानात्,

**तरुशिखरात्** = वृक्षप्रदेशात्, **परिच्युतः** = निपतितः, **वा** = अथवा, **अनेन** = शुक-शावकेन, **श्येनमुखपरिभ्रष्टेन** = श्येनः शशादनः तस्य मुखात् चञ्च्वाः परि-भ्रष्टेन परिच्युतेन, **भवितव्यम्** = भाव्यम्, **तथाहि** = पूर्वोक्तमेव समर्थ्यते **प्रपातस्य** = परिपतनस्य, **अतिदवीयस्तया** = अतिदूरप्रदेशभावितया, **अल्पशेष-जीवितः** = अल्पं किंचित् शेषम् अविशिष्टं जीवितं जीवनं प्राणशक्तिः यस्य स तादृशः, **अयम्** = शुकशावकः, **अमीलितलोचनः** = अमीलिते मुद्रिते लोचने नेत्रे यस्य सः तादृशः सन्, **मुहुर्मुहुः** = भूयोभूयः **मुखेन** = लपनेन, **पतति** = लुठति, **मुहुर्मुहुः अत्युल्बणम्** = अत्युत्कटम्, **श्वसिति** = प्राणिति, **मुहुर्मुहुः चञ्चुपुटम्** = मुखसंपुटम् (चञ्चुः त्रोटी), **विवृणोति** = व्याददाति, **शिरोधराम्** = ग्रीवाम्, **धारयितुम्** = निधातुम्, **न शक्नोति** = न पारयते, **तत्** = तस्मात्, **एहि** = आयाहि, **यावदेव** = यावत्कालपर्यन्तमेव, **अयम्** = शुकशावकः, **असुभिः** = प्राणैः, **न विमुच्यते** = न परित्यज्यते, **तावदेव** = तावत्कालपर्यन्तमेवं, तस्मा-त्कालात् प्रागेवेत्यर्थः, **इमम्** = शुकशिशुम्, **प्रहाण** = उत्थापय, **सलिलसमीपम्** = जलान्तिकम्, **अवतारय** = प्रापय, **इति** = इत्थम्, **अभिधाय** = कथयित्वा, **तेन** = तपस्विकुमारेण, **माम्** = वैशम्पायनम्, **सरस्तीरम्** = पम्पासरोवरतटम् **अनाययत्** = प्रापयत् ।

**टिप्पणी—अतिदवीयस्तया**—अतिशयेन दूर इति दवीयान्; दूर + ईयसुन्, दूर के स्थान पर दव आदेश—दवीयस् + तल् + टाप् = दवीयस्ता तया दवीय-स्तया । **परिच्युतः**—परि + च्यु + क्त । **मुखेन पतति**—मुख के बल गिरता है । प्रकृत्यादिभ्य उपसंख्यानम्' से तृतीया विभक्ति । **गृहाण**—ग्रह् धातु लोट् प्र० पु० ए० व० ।

उपसृत्य च जलसमीपमेकदेशनिहितदण्डकमण्डलुरादाय स्वयं मामामुक्तप्रयत्नमुत्तानितमुखमङ्गुल्याकतिचित्सलिलबिन्दूनपाययत् । अम्भ क्षोदकृतसेकञ्चोपजातनवीनप्राणमुपतटप्ररूढस्य नवनलिनीप-लाशस्य जलशिशिरायां छायायां निधाय यथासमुचितमकरोत् स्नानविधिम् । अभिषेकावसाने चानेकप्राणायामपूतो जपन् पवि-

त्राण्यघमर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दैर्नलिनीपत्रपुटेन भगवते सवित्रे दत्त्वार्घ्यमुदतिष्ठत् । आगृहीतधौतधवलवल्कलश्च सज्योत्स्न इवं संध्यातपः करतलनिर्धूननविशदसटः प्रत्यग्रस्नानार्द्र-जटेन सकलेन तेन मुनिकुमारकदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैः शनैरगच्छत् ।

**हिन्दी अनुवाद**—जल के पास पहुंच कर दण्ड और कमण्डलु को एक ओर रखकर (अन्नपानादि शरीरानुकूल) प्रयत्नों से विहीन अर्थात् निश्चेष्ट हुए तथा उत्तानित (ऊपर उठे हुए) मुखवाले मुझको स्वयं संभाल कर अँगुली से जल की कुछ बूंदों को पिलाया । पानी के छीटों से अभिषेक (सिञ्चन) किये हुये, तथा उत्पन्न हुई नूतन प्राणशक्तियों वाले मुझको तट के समीप उगी हुई नवीन कमलिनी के पत्ते की जल के कारण शीतल हुई छांव में रखकर यथोचित रूप से स्नानक्रिया सम्पादित की तथा स्नानकार्य समाप्त हो जाने पर अनेक प्राणायामों से पवित्र होने पर भी अघमर्षण (जलदेवता स्तवनरूप) मंत्रों को जपता हुआ, ऊर्ध्वमुख होकर कमलिनी के पत्ते से बने दोने द्वारा तत्काल चुने गये लाल कमलपुष्पों से भगवान सूर्य को अर्घ (पूजा) प्रस्तुत कर उठ खड़ा हुआ । (तदनन्तर) धुले हुये धवल वल्कल-वसनों को धारण किये हुये (अतएव) चन्द्रिकाचर्चित सान्ध्यकालीन सूर्य के प्रकाश की भांति, हथेलियों से झटकने के कारण निर्मल जटाओं वाला तथा तत्काल स्नान करने के कारण गीली जटाओं वाले उस समग्र तापसशिशुसमूह द्वारा अनुसरण किया जाता हुआ, मुझे (साथ) लेकर धीरे-धीरे तपोवन की ओर चल पड़ा ।

**संस्कृत-व्याख्या—जलसमीपम्** = सलिलान्तिकम्, **उपसृत्य च** = प्राप्य, **एकदेशनिहितदण्डकमण्डलुः** = एकदेशे एकस्मिन् प्रदेशे निहितौ स्थापितौ दण्ड-कमण्डलू लगुडकुण्डिके येन सः तादृशः, **माम्** = वैशम्पायनम्, **स्वयम्** = आत्मना, **आदाय** = गृहीत्वा, **आमुक्तप्रयत्नम्** = आमुक्तः परित्यक्तः प्रयत्नः प्रयासः येन तादृशम्, **उन्नामितमुखम्** = उन्नामितम् ऊर्ध्वीकृतं मुखम् लपनं यस्य तम्, **अङ्गुल्या** = कराग्रेण, **कतिचित्** = कियन्तः, **सलिलबिन्दून्** = सलिलस्य जलस्य

बिन्दवः सलिलबिन्दवः तान् जलकणान्, **अपाययत्**=पानमकारयत् । **अम्भः-क्षोदकृतसेकम्**=अम्भसः सलिलस्य क्षोदैः कणैः कृतः विहितः सेकः सेचनं यस्य तं तादृशम्, **अतएव च उपजातनवीनप्राणम्**=उपजाताः उत्पन्नाः नवीनाः नवाः. प्राणाः जीवनशक्तिः यस्य तं तादृशम्, **उपतटप्ररूढस्य**=तटस्य समीपम् उपतटं तीरसमीपं प्ररूढस्य प्रादुर्भूतस्य, **नवनलिनीपलाशस्य**=नवः नवीनः यो नलिन्या कमलिन्याः पलाशः पत्रं तस्य, **जलशिशिरायाम्**=जलेन उदकेन शिशिरा शीतला तस्याम्, **छायायाम्**=अनातपे, **निधाय**=स्थापयित्वा, **यथासमुचितम्**=समुचितं अनतिक्रम्य यथायोग्यं, **स्नानविधिम्**=मज्जनविधानम्, **अकरोत्**=कृतवान् । **च**=क्रियासमुच्चयार्थमिदम्, **अभिषेकावसाने**=अभिषेकः स्नानं अस्य अवसाने अन्ते, **अनेकप्राणायामपूतः**=अनेके बहवः ये प्राणायामः पूरककुम्भ-करेचकाः तैः पूतः मेध्यः सन्, **पवित्राणि**=पूतानि, **अघमर्षणानि**=पापक्षयका-रीणि मन्त्राणि 'ऋतं च सत्यं चेत्यादीनिः'। **जपन्**=शनैः पठन्, **उन्मुखः**=**पूर्वा-**भिमुखः, **प्रत्यग्रभग्नैः**=प्रत्यग्रं नवीनं अग्नैः अवचितैः, **रक्तारविन्दैः**=अरुण-कमलैः सह इति शेषः, **नलिनीपत्रपुटेन**=नलिनी कमलिनी तस्या पत्रपुटं **पर्ण-**पुटकं तेन साधनभूतेन, **भगवते**=ऐश्वर्यशालिनि, **सवित्रे**=सूर्याय, **अर्घ्यम्**=अर्घः पूजा तस्मै हितं जलम्, **दत्वा**=समर्प्य, **उदतिष्ठत्**=उत्थितोऽभूत् । **आगृहीतधौतवल्कलः**=आगृहीतं परिहितं धौतं क्षालितं धवलं स्वच्छम् वल्कलं वृक्षत्वक् येन सः तथोक्तः, **अतएव च सज्योत्स्नः**=ज्योत्स्ना चन्द्रिका तया सह वर्तमानः, **सन्ध्यातपः**=सन्ध्याकालिकसूर्यप्रकाशः स इव, **करतलनिर्धूनन-विशदसटः**=करतलाभ्यां पाणितलाभ्यां यत् निर्धूननम् आस्फालनं तेन विशदाः स्वच्छाः सटाः जटाः यस्य स तादृशः, **प्रत्यग्रस्नानार्द्रजटेन**=प्रत्यग्रं तत्कालं यत् स्नानं अभिषेकः तेन, आर्द्राः क्लिन्नाः जटाः सटाः यस्य स तेन, मुनिकुमार-कदम्बकविशेषणमिदम्, **सकलेन**=सम्पूर्णेन, **तेन**=पूर्वोक्तेन, **मुनिकुमारकद-म्बकेन**=मुनीनां ऋषीणां कुमारः पुत्रः तेषां कदम्बकं तेन तपस्विबालकसमूहेन, **अनुगम्यमानः**=अनुव्रज्यमानः, **माम्**=वैशम्पायनम्, **गृहीत्वा**=आदाय, **शनैः शनैः**=मन्दं मन्दम्, **तपोवनाभिमुखम्**=निजाश्रमसम्मुखम्, **अगच्छत्**=अव्रजत् ।

**टिप्पणी–उपसृत्य**–उप+सृ+क्त्वा–ल्यप् । **आदाय**–आ+दा+क्त्वा–ल्यप् । **क्षोद**–जलकण, **सेक**–सींचना । **प्राणायामपूत**–कई प्राणायामों से पवित्र होकर बाह्यशुद्धि के लिए जलमृत्तिका तथा अन्तःशुद्धि के लिए प्राणायाम का विधान धर्मशास्त्रों में विहित है । **अधमर्षणानि**–पाप शान्ति के लिये जपा जाने वाला अधमर्षण सूक्त जो संध्याकर्म का प्रधान अङ्ग है । **निर्धूनन**–फटकारना, झटका देकर स्वच्छ करना । **सटाः**=जटाएँ । **कदम्बक**–समूह । **गृहीत्वा**–ग्रह्+क्त्वा ।

अनतिदूरमिव गत्वा दिशि दिशि सदा सन्निहितकुसुमफलैस्ताल-तिलकतमालहिन्तालबकुलबहुलैः, एलालताकुलितनारिकेलकलापैः, आलोललोध्रलवलीलवङ्गपल्लवैः,उल्लसच्चूतरेणुपटलैः, अलिकुलझंकारमुखरसहकारैः, उन्मदकोकिलकुलकलालापकोलाहलिभिः, उत्फुल्लकेतकीरजःपुञ्जपिञ्जरैः, पूगीलतादोलाधिरूढवनदेवतैः, तारकावर्षमिवाधर्मविनाशपिशुनं कुसुमनिकरमनिलचलितमनवरतमतिधवलमुत्सृजद्भिः, संसक्तपादपैः काननैरुपगूढम्, अचकितप्रचलितकृष्णसारशतशबलाभिः, उत्फुल्लकमलिनीलोहिनीभिः, मारीचमायामृगावलूनरूढवीरुद्लाभिः दाशरथिचापकोटिक्षतकन्दगर्तविषमितलाभिर्दण्डकारण्यस्थलीभिरुपशोभितप्रान्तम्....'

**हिन्दी-अनुवाद**–थोड़ी ही दूर (आगे) बढ़कर मैंने अत्यन्त रमणीय तथा द्वितीय ब्रह्मलोक के समान (महर्षि जाबालि के) आश्रम को देखा–जो कि प्रत्येक दिशा में सदैव विद्यमान फलों और फूलों से युक्त–ताल, तिलक, तमाल हिन्ताल एवं मौलसिरी वृक्षों के कारण बहुल (सघन)–इलायची की लताओं से परिव्याप्त नारियल के वृक्षसमूह वाले–चंचल लोध्र (दुपहरिया फूल),लवली तथा लवङ्ग के पल्लवों वाले–उड़ते हुए आम्रवृक्ष के परागपुञ्ज से युक्त-मधुकरमण्डली की 'भनभनाहट' से शब्दायमान सहकारवृक्षों (सुरभित आमों) वाले मतवाले कोकिलों की टोली के मधुर शब्दों के कोलाहल से युक्त-पुष्पित मालतीलता की पुष्पवल्लरियों के परागपुञ्ज से पीतरक्त वर्ण वाले–पूगीलता

(सुपारी की लता) रूपी हिंडोले पर आरूढ़ हुई वनदेवियों वाले–अधर्म के विनाश की सूचना देने वाले 'तारकावर्ष' (उल्कापात) की भाँति वायु द्वारा प्रेङ्खोलित अत्यन्त धवल पुष्पसमूह को प्रतिपल गिराने वाले तथा परस्पर सटे हुए वृक्षों वाले वनों से संकुल था, जो असंत्रस्त भाव से सञ्चरण करने वाले सैकड़ों 'कृष्णसार' (काले) मृगों के कारण नाना रंगों वाली–खिली हुई स्थलकमलिनियों (गुलाबों) के कारण लोहितवर्ण वाली–(रावण के मामा) मारीच रूपी मायामृग द्वारा खाये गये (तदनन्तर) गपछाए हुए लतापल्लवों वाली दशरथ पुत्र श्रीराम के धनुष की नोंक से उखाड़े गए कन्दमूलों के गड्ढों से उच्चावच धरातल वाली दण्डकारण्य की स्थलभूमियों से सुशोभित पिछले भाग (पृष्ठभूमि) वाला था।

**संस्कृत-व्याख्या**–अनतिदूरम् इव=किंचिद्द्वीयांसं मार्गं, **गत्वा**=व्रजित्वा, **दिशि दिशि**=प्रतिदिशम्, **सदासन्निहितकुसुमफलैः**=सदा सर्वदा संनिहितानि अवस्थितानि कुसुमानि प्रसूनानि रसोद्भावानि सस्यानि च येषु तैः तादृशैः, **तालतिलकतमाल-हिन्ताल-बकुल-बहुलैः**=तालाः तिलकाः तमालाः तापिच्छाः हिन्तालाः बकुलाश्च केसराश्च एतदाख्याः वृक्षाः बहुलाः अधिकाः येषु तैः तादृशैः, **एलालताकुलितनारिकेलकलापैः**=एलालताभिः चन्द्रबालावल्लीभिः आकुलितः व्याप्तः नारिकेलकलापः लाङ्गलीतरुसमूहः येषु तैः तादृशैः, **आलोल-लोध्रलवलीलवङ्गपल्लवैः**=आ समन्तात् लोलाः वायुना चञ्चलाः लोध्राणां गालावानां लवलीनां लवङ्गानां च पल्लवाः किसलयानि येषु तेषु तादृशेषु, **उल्लसच्चूतरेणुपटलैः**=उल्लसन्ति पवनवेगेन स्फुरन्ति चूतानाम् आम्रमञ्जरीणां रेणुपटलानि परागसमूहाः येषु तैः तादृशैः, **अलिकुलझङ्कारमुखरसहकारैः**=अलिकुलानां मधुकरदलानां झङ्कारेण गुञ्जितेन मुखराः वाचालः सहकाराः रसालाः येषु तैः तादृशैः **उन्मदकोकिलकुलकलापकोलाहलिभिः**=उन्मदानि मदमत्तानि यानि कोकिलानां पिकानां कुलानि समूहाः तेषां ये कलालापाः अव्यक्तमधुरकूजितानि तैः कोलाहलिभिः मुखरैः, **उत्फुल्लकेतकीरजःपुंजपिंजरैः**=उत्फुल्लाः प्रस्फुटिताः याः केतक्यः मालत्यः तासां रजःपुञ्जेन परागपटलेन, **पिंजरैः**=पीतवर्णैः, **पूगीलतादोलाधिरूढवनदेवतैः**=पूगीलताः क्रमुक-

वल्लयः एव दोलाः अधिरोहिण्यः ताः अधिरूढाः आश्रिताः वनदेवताः विपिनाधिष्ठातृदेव्यः येषु तैः तादृशैः, **अधर्मविनाशपिशुनम्**=अधर्मः पापं तस्य विनाशः ध्वंसः तस्य पिशुनम् सूचकम्, **अनिलचलितम्**=अनिलेन वायुना चलितम् आन्दोलितम्, **अतिधवलम्**=अत्यन्तशुभ्रम्, **कुसुमनिकरम्**=पुष्पसमूहम्, **तारकावर्षम् इव**=उल्कापातम्, इव, **अनवरतम्**=सततम्, **उत्सृजद्भिः**,=परित्यजद्भिः, **संसक्तपादपैः**=संश्लिष्टवृक्षैः, **काननैः**=विपिनैः, **उपगूढम्**=आश्लिष्टम्, **अचकितप्रचलितकृष्णसारशतशबलाभिः**=अचकिताः अभीताः प्रचलिताः सञ्चरन्ताः; ये कृष्णसाराः एतदाख्याः चित्रमृगाः तेषां शतं समूहः तेन शबलाभि विचित्राभिः, **उत्फुल्लकमलिनीलोहिनीभिः**=उत्फुल्लाःप्रस्फुटिताः याः कमलिन्यः स्थलपद्मिन्यः ताभिः हेतुभूताभिः लोहिनीभिः रक्तवर्णाभिः, **मारीचमायामृगावलूनरूढवीरुद्दलाभिः**=मारीचः एतन्नामासुरः स एव मायामृगः कपटहरिणः तेन अवलूनानि-छिन्नानि पश्चात् रूढानि समुपजातानि वीरुधां लतानां दलानि पत्राणि यासु ताभिः तादृशीभिः, **दाशरथिचापकोटिक्षतकन्दगर्तविषमिततलाभिः**=दाशरथी रामलक्ष्मणौ तयोः चापकोट्या कार्मुकाग्रेण क्षतानि उत्खातानि यानि कन्दानि वृक्षमूलानि तेषां गर्तैः भूविवरैः विषमितम् उच्चावचं तलं भूतलं यासां ताभिः तादृशीभिः, **दण्डकारण्यस्थलीभिः**=दण्डकारण्यस्य दण्डसंज्ञकवनस्य स्थलीभिः भूमिभिः, **उपशोभितप्रान्तम्**=उपशोभितः शोभां लम्भितः प्रान्तः पश्चात् प्रदेशः यस्य सः तं तादृशम् ।

**टिप्पणी–आलोल**–चञ्चल, वायु के चलने से काँपते हुए । **मुखर**=गुञ्जित; मुखं मुखव्यापारं कथनं राति–मुख+रा+क=मुखर । **उत्सृजद्भिः**-उत्+सृज्+शतृ तृ०ए०व० । उप+गुह्+क्त=उपगूढम् । **अचकित**-निर्भीक शत–समूह, शत व सहस्र शब्द निश्चित संख्या का बोध तो कराते ही हैं साथ ही ये बहुत्व के द्योतक हैं । यहाँ शत शब्द बहुत्व के अर्थ में ही प्रयुक्त हुआ है । **मारीचमायामृगावलून**–ताड़का राक्षसी के पुत्र व सुबाहु के भाई मारीच ने रावण के कहने पर कपट का वेश धारण कर जिन लताओं के पत्तों को तोड़ा था; अव+लू+क्त=अवलून । '**पूगीलता**.........' में **अतिशयोक्ति** अलङ्कार है । '**तारकावर्षमिव**' में **पूर्णोपमालङ्कार** है ।

····आगृहीतसमित्कुशकुसुमसमृद्भिः अध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भिर्मुनिभिरशून्योपकण्ठम्, उत्कण्ठितशिखण्डिमण्डलश्रूयमाणजलकलशपूरध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः, सशरीरमेव मुनिजनममरलोकंनिनीषुभिरुद्धूयमानधूमलेखाच्छलेनाबध्यमानस्वर्गगमनसोपानसेतुमिवोपलक्ष्यमाणम्, आसन्नवर्तिनीभिः तपोवनसंपर्कादिवापगतकालुष्याभिः तरङ्गपरम्परासंक्रान्तरविबिम्बपङ्क्तिभिस्तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिरिव, अतिविकचकुमुदवनमृषिजनमुपासितुमवतीर्णं ग्रहगणमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतम्, अनिलावनमितशिखराभिः प्रणम्यमानमिव वनलताभिः, अनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्धपल्लवाञ्जलिभिरुपास्यमानमिव विटपैः,·····।

हिन्दी-अनुवाद—जो समिधाओं (यज्ञोपयोगी इन्धनों) कुशों, पुष्पों, एव मृत्तिकाओं को लिए हुये—वेदपरायण के कारण वाचाल शिष्यों से अनुगत तथा चारों ओर से प्रवेश करते हुए मुनियों द्वारा अशून्य (अर्थात् भरेपूरे) उपकण्ठ (पड़ोस या सामीप्य) वाला था, जो (मेघध्वनि की आशङ्कावश) उत्कण्ठित मयूरमण्डल द्वारा सुनी जाती हुई जलकलश भरने की (भुक् भुक् भुक्) ध्वनि वाला था, जो निरन्तर प्रदान की गई घृताहुतियों से सन्तुष्ट (अतएव) मुनिजनों को सशरीर देवलोक ले जाने के अभिलाषी यज्ञाग्नियों द्वारा लहराती हुई ऊर्ध्वगामिनी धूम पंक्तियों के बहाने मानो स्वर्गपथ पर पहुँचने के लिए निर्मित किए गए सोपानसेतुओं (सीढ़ियों की शृंखलाओं) से युक्त प्रतीत होता था, जो—समीपवर्तिनी—तपस्विजनों के (स्नानार्थ) सम्पर्कवश मालिन्यविहीन प्रतीत होने वाली—तरङ्गवीथियों में प्रतिबिम्बित सूर्य की परछाइयों के समूहों वाली अतएव तापसजनों के दर्शनार्थ आये हुए सप्तर्षि-समूह से विलोड्यमान प्रतीत होती हुई तथा रात्रिवेलाओं में ऋषिजनों की समर्चना के लिए (पृथ्वी पर) उतरे हुए नक्षत्रमण्डल की भांति पूर्णतः प्रफुल्लित कुमुदवन को धारण करती

हुई दीर्घिकाओं (बावलियों) से घिरा हुआ था, जो वायु द्वारा अवनमित किए गये शिखरों वाली वनलताओं से प्रणाम किया जाता हुआ प्रतीत होता था, जो प्रतिपल फूल झरने वाले वृक्षों द्वारा समर्पित किया जाता हुआ प्रतीत होता था, जो पल्लव रूपी प्रणामाञ्जलि बाँधे हुये वृक्षों द्वारा उपासना किया आ प्रतीत होता था ।

**संस्कृत-व्याख्या–आगृहीतसमित्कुशकुसुममृद्भिः**=आगृहीता सम्यगात्ताः समिधः काष्ठानि कुशाः दर्भाः कुसुमानि मृत् मृत्तिका च यैः तैः तादृशैः, **अध्ययनमुखरशिष्यानुगतैः**=अध्ययनेन वेदादिपाठेन मुखराः वाचलाः ये शिष्याः अन्तेवासिनः तैः अनुगताः तैः तथाभूतैः, **सर्वतः**=सर्वाभ्यः दिग्भ्यः, **प्रविशद्भिः**=प्रवेशं कुर्वद्भिः, **मुनिभिः**=तपस्विभिः, **अशून्योपकंठम्**=अशून्यः परिपूर्णः उत्कण्ठः निकटदेशो यस्य तम् तादृशम्: **उत्कंठितशिखण्डिमंडलश्रूयमाणजलकलशपूरणध्वानम्**=उत्कण्ठितैः उद्ग्रीवैः शिखण्डिनां मयूराणां मण्डलैः कदम्बकैः श्रूयमाणः आकर्ण्यमाणः जलेन सलिलेन कलशपूर्णस्य घटपूर्णस्य ध्वानः शब्दः यस्मिन् तं तादृशम्, **अनवरताज्याहुतिप्रीतैः**=अनवरतं सततं या आज्याहुतिः घृतहोमः तेन प्रीतैः प्रसन्नैः, **चित्रभानुभिः**=अग्निभिः गार्हपत्याहवनीय दक्षिणनामकैः, **मुनिजनम्**=ऋषिगणम्, **सशरीरमेव**=सदेहम् एवः **अमरलोकम्**=देवलोकम्, **निनीषुभिः**=नेतुमिच्छुभिः, **उद्धूयमानमलेखाच्छलेन**=उद्धूयमाना उत्कम्पमाना या धूमलेखा वह्निकेतनश्रेणी, अविच्छन्ना धूमपङ्क्तिः तस्याः छलेन कपटेन, **आबध्यमानस्वर्गमार्गगमनसोपानसेतुम् इव**=आबध्यमानः विरच्यमानः यः स्वर्गमार्गे अमरलोकपथे गमनाय सोपानसेतुः आरोहणालिः तम् इव, **उपलक्ष्यमाणम्**=दृश्यमानम् अतः परं तृतीयान्तानि पदानि दीर्घिकाविशेषणानि खलु ज्ञेयानि । **आसन्नवर्तिनीभिः**=आसन्नं समीपं वर्तन्ते इति तच्छीलाः ताभिः समीपस्थायिनीभिः: **तपोवनसम्पर्काद् इव**=धर्मारण्यसंसर्गाद्इव :**अपगतकालुष्याभिः**=अपगतं दूरीभूतं कालुष्यंमालिन्यं यासां ताभिः: **तरङ्गपरम्परासंक्रान्तरविबिम्बपङ्क्तिभिः**=तरङ्गाणां कल्लोलानां परम्परासु पङ्क्तिषु संक्रान्ता प्रतिफलिताः रवेः दिनकरस्य बिम्बपङ्क्तयः बिम्बराजयः यासु ताभिः तादृशीभिः, अतएव **तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिः इव**=तापसानां 'जाबाल्या-

····आगृहीतसमित्कुशकुसुमसमृद्भिः अध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भिर्मुनिभिरशून्योपकण्ठम्, उत्कण्ठितशिखण्डिमण्डलश्रूयमाणजलकलशपूरध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः, सशरीरमेव मुनिजनममरलोकंनिनीषुभिरुद्धूयमानधूमलेखाच्छलेनाबध्यमानस्वर्गगमनसोपानसेतुमिवोपलक्ष्यमाणम्, आसन्नवर्तिनीभिः तपोवनसंपर्कादिवापगतकालुष्याभिः तरङ्गपरम्परासंक्रान्तरविबिम्बपङ्क्तिभिस्तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिरिव, अतिविकचकुमुदवनमृषिजनमुपासितुमवतीर्णं ग्रहगणमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतम्, अनिलावनमितशिखराभिः प्रणम्यमानमिव वनलताभिः, अनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्धपल्लवाञ्जलिभिरुपास्यमानमिव विटपैः,·····।

**हिन्दी-अनुवाद**—जो समिधाओं (यज्ञोपयोगी इन्धनों) कुशों, पुष्पों, एव मृत्तिकाओं को लिए हुये—वेदपरायण के कारण वाचाल शिष्यों से अनुगत तथा चारों ओर से प्रवेश करते हुए मुनियों द्वारा अशून्य (अर्थात् भरेपूरे) उपकण्ठ (पड़ोस या सामीप्य) वाला था, जो (मेघध्वनि की आशङ्कावश) उत्कण्ठित मयूरमण्डल द्वारा सुनी जाती हुई जलकलश भरने की (भुक् भुक् भुक्) ध्वनि वाला था, जो निरन्तर प्रदान की गई घृताहुतियों से सन्तुष्ट (अतएव) मुनिजनों को सशरीर देवलोक ले जाने के अभिलाषी यज्ञाग्नियों द्वारा लहराती हुई ऊर्ध्वगामिनी धूम पंक्तियों के बहाने मानो स्वर्गपथ पर पहुँचने के लिए निर्मित किए गए सोपानसेतुओं (सीढ़ियों की शृंखलाओं) से युक्त प्रतीत होता था, जो—समीपवर्तिनी—तपस्विजनों के (स्नानार्थ) सम्पर्कवश मालिन्यविहीन प्रतीत होने वाली—तरङ्गवीथियों में प्रतिबिम्बित सूर्य की परछाइयों के समूहों वाली अतएव तापसजनों के दर्शनार्थ आये हुए सप्तर्षि-समूह से विलोड्यमान प्रतीत होती हुई तथा रात्रिवेलाओं में ऋषिजनों की समर्चना के लिए (पृथ्वी पर) उतरे हुए नक्षत्रमण्डल की भांति पूर्णतः प्रफुल्लित कुमुदवन को धारण करती

हुई दीर्घिकाओं (बावलियों) से घिरा हुआ था, जो वायु द्वारा अवनमित किए गये शिखरों वाली वनलताओं से प्रणाम किया जाता हुआ प्रतीत होता था, जो प्रतिपल फूल झरने वाले वृक्षों द्वारा समर्पित किया जाता हुआ प्रतीत होता था, जो पल्लव रूपी प्रणामाञ्जलि बाँधे हुये वृक्षों द्वारा उपासना किया आ प्रतीत होता था ।

**संस्कृत-व्याख्या–आगृहीतसमित्कुशकुसुममृद्भिः**=आगृहीता सम्यगाताः समिधः काष्ठानि कुशाः दर्भाः कुसुमानि मृत् मृत्तिका च यैः तैः तादृशैः, **अध्ययनमुखरशिष्यानुगतैः**=अध्ययनेन वेदादिपाठेन मुखराः वाचलाः ये शिष्याः अन्तेवासिनः तैः अनुगताः तैः तथाभूतैः, **सर्वतः**=सर्वाभ्यः दिग्भ्यः, **प्रविशद्भिः**=प्रवेशं कुर्वद्भिः, **मुनिभिः**=तपस्विभिः, **अशून्योपकंठम्**=अशून्यः परिपूर्णः उत्कण्ठः निकटदेशो यस्य तम् तादृशम्; **उत्कंठितशिखंण्डिमंडलश्रूयमाणजलकलशपूरणध्वानम्** =उत्कण्ठितैः उद्ग्रीवैः शिखण्डिनां मयूराणां मण्डलैः कदम्बकैः श्रूयमाणः आकर्ण्यमाणः जलेन सलिलेन कलशपूर्णस्य घटपूर्णस्य ध्वानः शब्दः यस्मिन् तं तादृशम्, **अनवरताज्याहुतिप्रीतैः**=अनवरतं सततं या आज्याहुतिः घृतहोमः तेन प्रीतैः प्रसन्नैः, **चित्रभानुभिः**=अग्निभिः गार्हपत्याहवनीय दक्षिणनामकैः, **मुनिजनम्**=ऋषिगणम्, **सशरीरमेव**=सदेहम् एवः **अमरलोकम्**=देवलोकम्, **निनीषुभिः**=नेतुमिच्छुभिः, **उद्धूयमानमलेखाच्छलेन**=उद्धूयमाना उत्कम्पमाना या धूमलेखा वह्निकेतनश्रेणी, अविच्छन्ना धूमपङ्क्तिः तस्याः छलेन कपटेन, **आबध्यमानस्वर्गमार्गगमनसोपानसेतुम् इव**=आबध्यमानः विरच्यमानः यः स्वर्गमार्गे अमरलोकपथे गमनाय सोपानसेतुः आरोहणालिः तम् इव, **उपलक्ष्यमाणम्**=दृश्यमानम् अतः परं तृतीयान्तानि पदानि दीर्घिकाविशेषणानि खलु ज्ञेयानि । **आसन्नवर्तिनीभिः**=आसन्नं समीपं वर्तन्ते इति तच्छीलाः ताभिः समीपस्थायिनीभिः: **तपोवनसम्पर्काद् इव**=धर्मारण्यसंसर्गाद्इव :**अपगतकालुष्याभिः**=अपगतं दूरीभूतं कालुष्यंमालिन्यं यासां ताभिः: **तरङ्गपरम्परासंक्रान्तरविबिम्बपङ्क्तिभिः**=तरङ्गाणां कल्लोलानां परम्परासु पङ्क्तिषु संक्रान्ता प्रतिफलिताः रवेः दिनकरस्य बिम्बपङ्क्तयः बिम्बराजयः यासु ताभिः तादृशीभिः, अतएव **तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिः इव**=तापसानां जाबाल्या-

दितपस्विनां दर्शनाय साक्षात्काराय आगता प्राप्ता या सप्तर्षिमाला मारीच्यादि-चित्रशिखण्डिपङ्क्तिः तया विगाह्यमानाभिः विलोड्यमानाभिः इव, **निशासु**—क्षपासु, **अतिविकचकुमुदवनम्**—अतिविकचं बहुविकसितं यद् कुमुदवनं कैरवकाननं तत्, **ऋषिजनम्**—तपस्विगणम्, **उपासितुम्**—सेवितुम् **अवतीर्णम्**—उपगतम्, **ग्रहगणम् इव**—भौमादिमण्डलम् इव, **उद्वहन्तीभिः**—धारयन्तीभिः **दीर्घिकाभिः**—वापीभिः, **परिवृतम्**—परिवेष्टितम्, **अनिलावनमितशिखराभिः**—अनिलेन पवनेन अवनमितानि नम्रीकृतानि शिखराणि अग्रभागाः यासां ताभिः, **वनलताभिः**—विपिनवल्लरीभिः **प्रणम्यमानमिव**—नमस्क्रियमाणम् इव, **अनवरतमुक्तकुसुमैः**—अनवरतं निरन्तरं मुक्तानि त्यक्तानि कुसुमानि प्रसूनानि यैः तैः तादृशैः, **पादपैः**—वृक्षैः, **अर्च्यमानमिव**—पूज्यमानम् इव, **आबद्धपल्लवाञ्जलिभिः**—आबद्धाः निर्मिताः पल्लवाः किसलयानि एव अञ्जलयः यैः तैः तादृशैः **विटपैः**—स्कन्धैः, **उपास्यमानम् इव**—सेव्यमानमिव ।

**टिप्पणी**—**आगृहीत**—आ + ग्रह् + क्त । **शिष्य**—शास् + क्यप् । **उपकण्ठ**—पास का प्रदेश । **श्रूयमाण**—श्रु + यक् + शानच् । **चित्रभानुः**—अग्नि । (चित्राःकर्बुराः भानवः शिखाः यस्य सः चित्रभानुः) । **निनीषुभिः**—नी + सन् + उ; तृ० ब० व० । **ग्रहगण**—ग्रहसमूह, 'अर्कानयो ग्रहाः'; इत्यमरः । ज्योतिर्विज्ञान के आधार पर सूर्यचन्द्र आदि ग्रह हैं, किन्तु वर्तमान भूगोलवेत्ता सूर्य को केन्द्र मानकर उसके चारों ओर घूमने वाले मङ्गल आदि को ग्रह तथा ग्रहों का चक्कर लगाने वाले चन्द्र को उपग्रह मानते हैं । यहाँ बाण की मान्यता पुरातन ही है । यहाँ ग्रहगण से तात्पर्य सामान्यतः नक्षत्रमण्डल से ही है । '**तपोधनसम्पर्कादिव**' में हेतूत्प्रेक्षालङ्कार है । '**विगाह्यमानाभिः**'—में क्रियोत्प्रेक्षा, 'ग्रहगणमिव' में जात्युत्प्रेक्षा, प्रणम्यमानमिव, अर्च्यमानमिव तथा उपास्यमानमिव में क्रियोत्प्रेक्षालङ्कार है ।

...उटजाजिरप्रकीर्णशुष्यच्छ्यामाकम्, उपसंगृहीतामलकलवलीकर्कन्धूकदलीलकुचचूतपनसतालीफलम्, अध्ययनमुखरवटुजनम्, अनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम्, अनेकसारिकोद्घुष्यमाण-

सुब्रह्मण्यम, अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्डम्, आसन्नवापीकलहंसपोतभुज्यमाननीवारवलिम्, एणीजिह्वापल्लवोपलिह्यमानमुनिबालकम्, अग्निकार्यार्धदग्धसिमसिमायमानसमित्कुशकुसुमम् उपलभग्ननारिकेलरसस्निग्धशिलातलम्, अचिरक्षुण्णवल्कलरसपाटलभूतलम्, रक्तचन्दनोपलिप्तादित्यमण्डलकनिहितकरवीरकुसुमम्, इतस्ततो विक्षिप्तभस्मलेखालङ्कृतमुनिजनभोजनभूमिभागम्……।

**हिन्दी-अनुवाद**—जो पर्णशालाओं के प्राङ्गणों में फैलाए गये सूखते हुए श्यामाकधान्यों (साँवा) से युक्त था, जो एकत्र किये गये (बघारे गये) आम्रलक (आँवला) लवली, कर्कन्धू (बदरीफल या बेर), केला, लकुच, आम, कटहल तथा तालफलों से युक्त था, जो वेदपाठ के कारण वाचाल बटुजनों (ब्रह्मचारियों) से संकुल था, जो निरन्तर श्रवणमात्र से शिक्षित 'वषट्कार' के कारण वाचालभूत शुकसमूह वाला था, जो असंख्य सारिकाओं द्वारा उच्चस्वर से पढ़े जाते हुए वेदमन्त्रों वाला था, जो बनैले कुक्कुटों (बनमुर्गों) द्वारा खाये जाते हुये देवयज्ञों के बलिपिण्डों (भक्ष्यसामग्री) वाला था, जो निकटवर्तिनी बावड़ी के कलहंस-शिशुओं द्वारा भक्षित की जाती हुई नीवार (वन्यधान्य) की बलि वाला था, जो हरिणियों के रसना (जीभ) रूपी पल्लवों से चाटे जाते हुये मुनिबालकों वाला था, जो अग्निकार्यों (यज्ञों) में अधजले अतएव, 'सिमसिम' शब्द उत्पन्न करने वाले कुशों, समिधाओं तथा पुष्पों वाला था, जो पत्थरों पर द्वैधीकृत (तोड़े गये) नारिकेल फल के रस से चिकने शिलातल वाला था, जो तत्काल (वृक्षों से) निकाले गये वल्कलों के रस से श्वेतरक्त भूतलवाला था, जो लाल चन्दन से लिप्त करके (भूतल पर आलिखित) सूर्यमण्डल पर चढ़ाये गये करवीर पुष्पों वाला था, जो इधर-उधर खींची गयी भस्मरेखाओं से अलंकृत मुनिजनों के रसोईं घर वाला था।

**संस्कृत-व्याख्या—उटजाजिरप्रकीर्णशुष्यच्छ्यामाकम्**—उटजानां पर्णशालानाम् अजिरेषु प्राङ्गणेषु प्रसारिताः अतएव शुष्कतां शोषं प्राप्नुवन्तः श्यामाकाः धान्यविशेषाः यस्मिन् स तादृशम्, **उपसंगृहीतामलकलवलीकर्कन्धूकदली-लकुचचू**

**तपनसतालीफलम्**=उपसंगृहीतानि एकत्रीकृतानि आमलकं धात्री लवली लता-विशेषः कर्कन्धूः बदरी कदली रम्भा लकुचः डहुः चूतः आम्रः पनसं कण्टकी-ताली तृणराजः एतानि फलानि यत्र स तं तादृशं तम्, **अध्ययनमुखरबटुजनम्**=अध्ययनेन वेदादिपाठेन मुखराः शब्दायमानाः बटुजना ब्रह्मचारिवर्गाः यत्र स तं तादृशम्, **अनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम्**=अनवरतं सततं श्रवणेन आकर्णनेन गृहीतः शिक्षितः यः वषट्कारः देवेभ्यो हविर्दाने उच्चारितः शब्दः 'इन्द्राय वषट्' इत्यादिरूपः तेन वाचालानि शब्दायमानानि शुककुलानि कीरसमूहाः यत्र स तादृशम्: **अनेकसारिकोद्घुष्यमाणसुब्रह्मण्यम्**=अनेकाभिः बह्वीभिः सारिकाभिः पीतपदाभिः उद्घुष्यमाणम् उच्चैः अभ्यस्यमानं सुब्रह्मण्यं वेदः यत्र स तं तादृशम्, **अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्डम्**=अरण्य-कुक्कुटैः काननताम्रचूडैः उपभुज्यमानाः भक्ष्यमाणाः वैश्वदेवस्य देवयज्ञस्य बलिपिण्डाः इन्तकाराः यत्र तम्, **आसन्नवापीकलहंसपोतभुज्यमाननीवारबलिम्**=आसन्ना समीपस्था या वापी दीर्घिका तस्याः ये कलहंसपोताः कादम्बशावकाः तैः भुज्यमानाः भक्ष्यमाणाः नीवारबलयः मुन्यन्नोपहाराः यत्र स तं तादृशम्, **एणीजिह्वापल्लवोपलिह्यमानमुनिबालकम्**=एणीभिः हरिणीभिः कर्तृभूताभिः जिह्वाः रसनाः एव पल्लवाः किसलयानि तैः करणभूतैः उपलिह्यमानाः आस्वा-द्यमानाः मुनिबालकाः ऋषिशिशवः यत्र स तं तादृशम्, **अग्निकार्यार्धदग्ध-सिमसिमायमानसमित्कुशकुसुमम्**=अग्निकार्येषु यज्ञेषु अर्धदग्धानि अर्ध-भस्मितानि अतएव सिमसिमायमानानि 'सिम् सिम्' इति शब्दं कुर्वाणानि समिधः काष्ठानि कुशाः दर्भाः कुसुमानि प्रसूनानि च यत्र तं तादृशम् **उपलभग्ननारिकेलरसस्निग्धशिलातलम्**=उपलः प्रस्तरैः भग्नानि त्रुटितानि यानि नारिकेलानि श्रीफलानि तेषां रसैः द्रवैः स्निग्धानि चिक्कणानि शिलातलानि प्रस्तराः यत्र स तं तादृशम्: **अचिरक्षुण्णवल्कलरसपाटल-भूतलम्**=अचिरं तत्कालं क्षुण्णानि उत्पाटितानि यानि वल्कलानि वृक्ष-त्वच. तेषां, रसैः निर्यासैः पाटलं श्वेतरक्तं भूतलं पृथ्वीतलं यत्र स तं तादृशम्, **रक्तचन्दनोपलिप्तादित्यमण्डलकनिहितकरवीरकुसुमम्**=रक्त-चन्दनेन पत्राङ्गेन उपलिप्तम् आलिखितं यद् आदित्यमण्डलम् एव आदित्य-

मण्डलकं सूर्यबिम्बं तस्मिन् निहितानि स्थापितानि करवीरकुसुमानि हयमारप्रसूनानि यत्र स तं तादृशम्, इतस्ततः=परितः, विक्षिप्तभस्मलेखालङ्कृतमुनिजनभोजनभूमिभागम्=विक्षिप्ताभिः प्रसृताभिः भस्मलेखाभिः भूतिपङ्क्तिभिः अलङ्कृताः भूषिताः मुनिजनानां ऋषिगणानां भोजनभूमिभागा भक्षणस्थलदेशाः यत्र स तं तादृशम् ।

**टिप्पणी**–उजट=पर्णशालायें । अजिर=प्राङ्गण । श्यामाक=मुनिधान्य विशेषः । लकुच=बड़हर का फल । ब्रह्मण्यं–ब्रह्मणे हितं ब्रह्मण्यं शोभनं च तद् ब्रह्मण्यं, सुब्रह्मण्यम् ब्रह्मन्+यत् । ब्रह्मज्ञान के लिए हितकारी वेद, वैदिक वाङ्मय, ब्रह्मसम्बन्धी पवित्र चर्चा । उपभुज्यमान–उप+भुज्+यक्+शानच् । वैश्वदेव–देवयज्ञ, पञ्चमहायज्ञों में देवयज्ञ प्रधान यज्ञ है, इसमें देवताओं के निमित्त हवन किया जाता है । सभी देवताओं के कारण इनका नाम वैश्वदेव है । पाँच महायज्ञ इस प्रकार हैं–१. देवयज्ञ-होम २. ऋषियज्ञ-वेदपाठ ३. पितृयज्ञ तर्पण-श्राद्ध ४. मनुष्ययज्ञ-अतिथिसेवा ५. भूतयज्ञ-बलि । एणी–हिरनी । क्षुण्ण–उपाडा गया, उखाड़ा गया, उत्पाटित । भोजन–भुज्+ल्युट् ।

…परिचितशाखामृगकराकृष्टयष्टिनिष्कास्यमानप्रवेश्यमानजरदन्धतापसम, इभकलभार्धोपभुक्तपतितैः सरस्वतीभुजलताविगलितैः शङ्खवलयैरिव मृणालशकलैः कल्माषितम्, ऋषिजनार्थमेणकैर्विषाणशिखरोत्खन्यमानविविधकन्दमूलम्, अम्बुपूर्णपुष्करपुटैर्वनकरिभिरापूर्यमाणविटपालवालकम्, ऋषिकुमारकाकृष्यमाणवनवराहदंष्ट्रान्तराललग्नशालूकम्, उपजातपरिचयैः कलापिभिः पक्षपुटपवनसंधुक्ष्यमाणमुनिहोमहुताशनम्, आरब्धामृतचरुचारुगन्धम्, अर्धपक्वपुरोडाशपरिमलामोदितम्, अविच्छिन्नाज्यधाराहुतिहुतभुग्हुङ्कारमखरितम्…।

**हिन्दी-अनुवाद**–जो परिचित वानरों के हाथों द्वारा आकृष्ट (ले जाई गई) छड़ियों के सहारे बाहर ले जाये जाते हुए तथा भीतर प्रवेश कराए जाते

हुए वृक्ष तन्वे तपस्विजनों वाला था, जो हस्तिशावकों द्वारा अर्धचर्वित (दशा में) नीचे गिरे हुए अतएव देवी सरस्वती की बाहुलताओं से परिभ्रष्ट शंख-निर्मित करकङ्कण प्रतीत होने वाले कमलनाल के टुकड़ों से चित्रित था, जो ऋषिजनों के (भक्षण) निमित्त वनहरिणों द्वारा (अपने) शृङ्गाग्रभागों से उखाड़े जाते हुए नाना प्रकार के कन्दमूलों वाला था, जो जल से भरे हुए 'पुष्करपुटों' (शुण्डाओं) वाले वनगजों द्वारा भरे जाते हुए वृक्षों के थालों वाला था, जो मुनिविशृ.ों द्वारा खींचे जाते हुए वनशूकरों की दाढ़ों में फँसे हुए शालूकों (कमल की जड़ों) वाला था, जो परिचय उत्पन्न हो जाने वाले (अर्थात् चिरपरिचित) मयूरों द्वारा (अपने) दोनों पंखों को हवा से धौंकी जाती हुई मुनियों की यज्ञाग्नि वाला था, जो तैयार किये गये 'अमृतचरु' (अमृत=घी या दूध में पकाया गया चावल ही अमृतचरु है) की मनोहर गन्धवाला था, जो अधपके पुरोडाश की पवित्र परिमल आमोदित (सुगन्धित अथवा हर्षजननशील) था, जो अटूट घृतधारा के हवन से (उत्पन्न) अग्नि-हुङ्कारों से शब्दायमान था।

**संस्कृत-व्याख्या**—**परिचितशाखामृगकराकृष्टयष्टिनिष्कास्यमानप्रवेश्यमानजरदन्धतापसम्**=परिचितैः पूर्वत एव समुत्पन्नपरिचयैः शाखामृगैः कपिभिः करेण आकृष्टा यष्टिः कराकृष्टयष्टिः तया हस्तालम्बितदण्डेन निष्कास्यमानाः निःसार्यमाणाः प्रवेश्यमाना अन्तः नीयमानाः जरन्तः वृद्धाः ते च अन्धाः नेत्र-हीनाः तापसाः तपस्विनः यस्मिन् स तं तादृशम्, **इभकलभार्धोपभुक्तपतितैः**=इभानां गजानां कलभाः शावकाः तै अर्धोपभुक्तैः अर्धचर्वितैः पश्चाच्च पतितैः च्युतैः, **सरस्वतीभुजलताविगलितैः**=सरस्वत्याः भारत्याः, भुजो एव लते भुज-लते बाहुवल्लयौ ताभ्यां विगलितैः स्रस्तैः, **शङ्खवलयैः इव**=कम्बुकटकैः इव, **मृणालशकलैः**=बिसखण्डैः, **कल्माषितम्**=कर्बुरितम्, **ऋषिजनार्थम्**=तप-स्विगणभक्षणार्थम्, **एणकैः**=हरिणैः कर्तृभिः, **विषाणशिखरोत्खन्यमानविविध-कन्दमूलम्**=विषाणशिखरैः शृङ्गाग्रैः करणभूतैः उत्खन्यमानानि उत्पाद्य-मानानि विविधानि अनेकविधानि कन्दाः शालूकादीनि मूलानि मूलकप्रभृतीनि यत्र स तं तादृशम्, **अम्बुपूर्णपुष्करपुटैः**=अम्बुभिः सलिलैः पूर्णानि संभृतानि

पुष्करपुटानि शुण्डाग्राणि येषां तैः तादृशैः, वनकरिभिः=विपिनगजैः, **आपूर्यमाणविटपालवालकम्**=आपूर्यमाणानि भ्रियमाणानि विटपानां स्कन्धानाम्, आलवालकानि आवापस्थानानि तत्र स तं तादृशम्, **ऋषिकुमारकाकृष्यमाणवनवराहदंष्ट्रान्तराललग्नशालूकम्**=ऋषिकुमारकैःतपस्विबालकैः आकृष्यमाणानि निःसार्यमाणानि वनवराहाणां काननसूकराणां दंष्ट्रान्तराले दशनमध्ये लग्नानि संसक्तानि शालूकानि नलिनकन्दाः यत्र स तं तादृशम्, उपजातपरिचयैः= उपजातः उत्पन्नः परिचयः संस्तवः आत्मीयता येषां तैः तादृशैः, कलापिभिः= मयूरैः, **पक्षपुटपवनसंधुक्ष्यमाणमुनिहोमहुताशनम्**=पक्षपुटानां छदपुटानां पवनेन वातेन संधुक्ष्यमाणाः प्रज्वाल्यमानाः मुनीनाम् ऋषीणां होमहुताशनाः यज्ञाग्नयः यत्र स तं तादृशम्, **आरब्धामृतचरुचारुगन्धम्**=आरब्धः प्रवर्तितः अमृतचरोः सघृतयवौदनस्य चारुः मनोहरः गन्ध आमोदः यत्र स तं तादृशम्, **अर्धपक्वपुरोडाशपरिमलामोदितम्**=अर्धपक्वस्य अर्धविक्लित्तिमापन्नस्य पुरोडाशस्य हवनीयद्रव्यस्य परिमलेन गन्धेन आमोदितं सुरभितम्, **अविच्छिन्नाज्यधाराहुतिहुतभुग्हुङ्कारमुखरितम्**=अविच्छिन्ना अत्रुटिता या आज्यधारा घृतपातः तस्याः आहुतिः होमः तया यः हुतभुजः अग्नेः हुङ्कारः 'हुम्' ध्वनिः तेन मुखरितं वाचालितम् ।

**टिप्पणी**–शाखामृग–बन्दर । कल्माषित–रंगबिरंगा, चितकबरा; कल्माषः संजातोऽस्येति कल्माषितम् कल्माष—कई रंग जो अलग-अलग दिखाई दे रहे हों; कल्माष+इतच्=कल्माषित । **उत्खन्यमान**–उत्+खन+यक्=शानच् । **पुष्करपुट**—हाथी की सूंड का अग्रभाग 'शुण्डाग्रं त्वस्य पुष्करम्', इत्यमरः । **शालूक**–कमलिनी की जड़ को कहते हैं । **अमृतचरु**–होमद्रव्य; जिसे घी, जौ चावल आदि से पकाया जाता है, 'हव्यपाके चरुः पुमान्' इत्यमरः (देवता लोग अग्नि हव्यवाहन) के द्वारा इस चरु का भोजन करते हैं यही उनके लिए अमृत है, अतः चरु को ही अमृतचरु कहते हैं । **पुरोडाश**–हवि, हवनीय द्रव्य; 'पुरोडाशो हवि–भेदे' विश्वकोष । हुतभुक्–अग्नि (हुतं भुङ्क्ते इति हुतभुक्) **शङ्खवलयैरिव** में जात्युत्प्रेक्षालङ्कार है ।

···उपचर्यमाणातिथिवर्गम्, पूज्यमानपितृदेवतम्, अर्च्यमानहरि-

हरपितामहम्, उद्दिश्यमानश्राद्धकल्पम्, व्याख्यायमानयज्ञविद्यम्, आलोच्यमानधर्मशास्त्रम्, वाच्यमानविविधपुस्तकम्, विचार्यमाण-सकलशास्त्रार्थम्, आरभ्यमाणमर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानोटजाभ्यन्तरम्, आबध्यमानध्यानम्, साध्यमानमन्त्रम्, अभ्यस्यमानयोगम्, उपह्रियमाणवनदेवताबलिम्, निर्वर्त्यमान-मौञ्जमेखलम्, प्रक्षाल्यमानवल्कलम्, उपसंगृह्यमाणसमिधम्, उपसंस्क्रियमाणकृष्णाजिनम्, गृह्यमाणगवेधुकम्, शोष्यमाणपुष्कर-बीजम्, ग्रथ्यमानाक्षमालम्, गृह्यमाणत्रिपुण्ड्रकम्, न्यस्यमानवेत्र-दण्डम्, सत्क्रियमाणपरिव्राजकम्, आपूर्यमाणकमण्डलुम्...।

हिन्दी-अनुवाद–जो सत्कार किये जाते हुए अतिथिगणों वाला था, जो पूजित किये जाते हुए पितृगणों एवं देवताओं वाला था, जो अर्चना किये जाते हुए विष्णु-महेश एवं ब्रह्मा वाला था, जो पढ़ाये जाते हुए (महर्षि गोभिल आदि द्वारा प्रणीत) श्राद्धकल्प वाला था, जो व्याख्या की जाती हुई यज्ञविद्या वाला था, जो आलोचित किये जाते हुए धर्मशास्त्रों वाला था, जो पढ़ी जाती हुई अनेक प्रकार की पुस्तकों वाला था, जो युक्तियों के साथ स्थापित किये जाते हुए समस्त शास्त्रार्थों वाला था, जो नये बनाये जाते हुए पर्णकुटीरों वाला था, जो (गोमयादि से) लीपे जाते हुए आँगनों वाला था, जो झाड़ू लगाये जाते हुए पर्णशालाओं के भीतरी भागों वाला था, जो बाँधे जाते हुए (लगाये जाते हुए) ध्यानों (प्रत्ययैकतानता) वाला था, जो (होमादि द्वारा) सिद्ध किये जाते हुए मंत्रों वाला था, जो अभ्यास किये जाते हुए (चित्तवृत्तिनिरोधात्मक) योगों वाला था, जो वनदेवियों के लिए भेंट चढ़ाये जाते हुए बलिपदार्थों वाला था, जो बँटी जाती हुई मौञ्जी मेखलाओं वाला था, जो धोये (पछारे) जाते हुए वल्कल वस्त्रों वाला था, जो एकत्र किये जाते हुए यज्ञ के इन्धनों वाला था, जो शुद्ध किये जाते हुए काले मृगचर्मों वाला था, जो ग्रहण किये जाते हुए 'गवेधुका' (धान्यविशेष) वाला था, जो सुखाये जाते हुए कमलगट्टों वाला था, जो गूँथी जाती हुई जपमालाओं वाला था, जो धारण किये जाते

हुए त्रिपुण्ड्रकों वाला था, जो रखे जाते हुए वेत्रदण्डों वाला था, जहाँ परिव्राजकों का सत्कार किया जा रहा था, जो जल से भरे जाते हुए कमण्डलुओं वाला था।

**संस्कृत-व्याख्या**–**उपचर्यमाणातिथिवर्गम्**=उपचर्यमाणःसत्कारं प्राप्यमाणः अतिथिवर्गः अभ्यागतसमूहः यत्र तं तादृशम्, **पूज्यमानपितृदैवतम्**=पूज्यमानानि अर्च्यमानानि पितरः पितृपितामहादयः दैवतानि देवा च यत्र तम् अथवा पूज्यमानानि पितृदैवतानि पितरःयत्र तं तादृशम्,**अर्च्यमानहरिहरपितामहम्**=अर्च्यमानाः पूज्यमानाः हरिः विष्णु हरः महेश्वरः पितामहः प्रजापतिश्च एते यत्र तं तादृशम्, **उद्दिश्यमानश्राद्धकल्पम्**=उद्दिश्यमानःउपदिश्यमानः श्राद्धकल्पः आश्वलायनादिरचितः श्राद्धविधिः यत्र तं तादृशम्, **व्याख्यायमानयज्ञविद्यम्**=व्याख्यायमाना स्पष्टीक्रियमाणा यज्ञविज्ञानं यत्र तं तादृशम्,**आलोच्यमानधर्मशास्त्रम्**=आलोच्यमानानि धर्मशास्त्राणि मन्वादिप्रणीतधर्मशास्त्राणि यत्र तं तादृशम, **वाच्यमानविविधपुस्तकम्**=वाच्यमानानि पठ्यमानानि विविधानि अनेकप्रकाराणि पुस्तकानि शास्त्राणि यत्र तं तादृशम्, **विचार्यमाणशकलशास्त्रार्थम्**=विचार्यमाणाः युक्त्या स्थाप्यमानाः सकलानां सम्पूर्णानां शास्त्राणां शासनग्रन्थानाम् अर्थाः आशयाः यत्र तम्, **आरभ्यमाणपर्णशालम्**=आरभ्यमाणाः विरच्यमानाः पर्णशालाः उटजाः यत्र तं तादृशम्, **उपलिप्यमानाजिरम्**=उपलिप्यमानानि संस्क्रियमाणानि अजिराणि प्राङ्गणानि यत्र तं तादृशम्, **उपमृज्यमानोटजाभ्यन्तरम्**=उपमृज्यमानानि शोध्यमानानि उटजानां पर्णशालानाम् अभ्यन्तराणि अन्तरालानि यत्र तं तादृशम्, **आबध्यमानध्यानम्**=आबध्यमानं विधीयमानं ध्यानं चिन्तनं यत्र तं तादृशम्, **साध्यमानमन्त्रम्**=साध्यमानाः वशीक्रियमाणाः मन्त्राः देवाधिष्ठातृकाः वर्णसमाम्नायाः यत्र तं तादृशम्, **अभ्यस्यमानयोगम्**=अभ्यस्यमानः पुनः पुनः क्रियमाणः योगः चित्तवृत्तिनिरोधः यत्र तं तादृशम्, **उपह्रियमाणवनदेवताबलिम्**=उपह्रियमाणाः समर्प्यमाणाः वनदेवताभ्यः अरण्याधिष्ठातृदेवीभ्यः बलय उपहाराः यत्र तं तादृशम्, **निर्वर्त्यमानमौञ्जमेखलम्**=निर्वर्त्यमानाः निर्मीयमाणाः मौञ्जयः मुञ्जमय्यः मेखलाः कटिबन्धनानि यत्र तं तादृशम्, **प्रक्षाल्यमानवल्कलम्**=प्रक्षाल्यमानानि जलेन निर्मलीक्रियमाणानि वल्कलानि वृक्षत्वचः यत्र तं तादृशम्, **उपसंगृह्यमाणसमिधम्**=उपसंगृह्यमाणाः उपादीयमानाः समिधः काष्ठानि यत्र तं तादृशम्,

**उपसंस्क्रियमाणकृष्णाजिनम्**=उपसंस्क्रियमाणानि विशुद्धीक्रियमाणानि कृष्णा-जिनानि कृष्णमृगचर्माणि यत्र तं तादृशम्, **गृह्यमाणगवेधुकम्**=गृह्यमाणाः आदीयमाना गवेधुकाः कन्दाः धान्यविशेषाः वा यत्र तं तादृशम्, **शोष्यमाण-पुष्करबीजम्**=शोष्यमाणानि शुष्कतां नीयमानानि पुष्करबीजानि कमलफलानि-यत्र तं तादृशम्, **ग्रथ्यमानाक्षमालम्**=ग्रथ्यमानाः ग्रन्थि प्राप्यमाणः अक्षमालाः अक्षस्रजः यत्र तं तादृशम्, **गृह्यमाणत्रिपुण्ड्रकम्**=गृह्यमाणानि ध्रियमाणानि त्रिपुण्ड्रकाणि तिर्यग्रेखात्रयात्मकाः तिलकविशेषाः यत्र तं तादृशम्, **न्यस्यमान-वेत्रदण्डम्**=न्यस्यमानाः स्थाप्यमानाः वेत्रदण्डाः वेतसलगुडाः यत्र तं तादृशम्, **सत्क्रियमाणपरिव्राजकम्**=सत्क्रियमाणाः परिव्राजकाः संन्यासिनः यत्र तं तादृशम्, **आपूर्यमाणकमण्डलुम्**=आपूर्यमाणाः भ्रियमाणाः कमण्डलवः जलपा-त्राणि यत्र तं तादृशम् ।

**टिप्पणी–उपचर्यमाण**–उप+चर्+यक्+शानच् । **अतिथि–अभ्यागत** 'आघुणस्त्वतिथिर्द्वयोः' इति त्रिकाण्डशेषः, जिसके आने की कोई तिथि निश्चित न हो (अनिश्चिता तिथिर्यस्य) अथवा वह महात्मा जो सदा घूमता रहता हो (अतति सदा गच्छति इति अतिथिः–अत्+इथिन्) और होम (वैश्वदेव) के समय गृहस्थ के घर उपस्थित हो (दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ।। (व्यास) अथवा जिस महात्मा ने तिथिपर्व आदि सबका त्याग कर दिया हो, सर्वथा निर्लेप (तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः ।। यम) **पूज्यमान**–पूज्+यक्+शानच् । **पितृदैवत**–पितर । **अर्च्यमान**–अर्च्+यक्+शानच् । **उपदिश्यमान**–उप+दिश्+यक्+शानच् । **श्राद्धकल्प**–श्राद्ध का विवेचन करने वाले आश्वलायन आपस्तम्ब आदि ऋषियों से प्रोक्त ग्रन्थ जिन्हें वेदाङ्ग की श्रेणी में गिना जाता है । कल्प वेद के हाथ हैं (हस्तौ कल्पोऽथ उच्यते) । **आलोच्यमान**–आ+लोच्+यक्+शानच् । **धर्मशास्त्र**–वे स्मृतिग्रन्थ जिनमें मानवजीवन की सर्वाङ्गीण मीमांसा करते हुए उनके लिए नीतिनिर्देश किया गया है । (श्रुतिस्तु वेदो विज्ञेयः धर्मशास्त्रं तु वै स्मृतिः) **पठ्यमान**–पठ्+यक्+शानच् । **उपलिप्यमान**–उप+लिप्+यक्+शानच् । **पुष्करबीज**–

कमलगट्टे । परिव्राजक—संन्यासी, (परित्यज्य सर्वं गृहकलत्रादिकं व्रजति वनायेति परिव्राजकः) । आपूर्यमाण—आ+पूर्+यक्+शानच् ।

....अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, अब्जयोनिमिव त्रिभुवनवन्दितम्, असुरारिमिव प्रकटितवराहनरसिंह-रूपम्, सांख्यमिव कपिलाधिष्ठितम्, मथुरोपवनमिव बलालीढदर्पितधेनुकम् उदयनमिवानन्दितवत्सकुलम्, किंपुरुषाधिराज्यमिव मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्, निदाघसमयावसानमिव प्रत्यासन्नजलप्रपातम् जलधरसमयमिव वनगहनमध्यसुखसुप्तहरिम्, हनुमन्तमिव शिलाशकलप्रहारसंचूर्णिताक्षास्थिनिचयम्, खाण्डवविनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्यम्, सुरभिविलेपनधरमपि सतताविर्भूतहव्यधूमगन्धम्, मातङ्गकुलाध्यासितमपि पवित्रम्, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवम्, परिपूर्णद्विजपतिमण्डलसनाथमपि सदा संनिहितगरुमहनान्धकारम्, अतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् ।

**हिन्दी-अनुवाद**—जो कलियुग द्वारा पहले (कभी) नहीं देखा गया था, जो असत्य से अपरिचित था, जो कामदेव द्वारा पहले (कभी) नहीं सुना गया था (अर्थात् कामप्रभावशून्य था), जो त्रिलोकी द्वारा वन्दना करने योग्य कमलयोनि ब्रह्मा की भाँति त्रिभुवन श्रेष्ठ था, जो (हिरण्याक्ष के वधार्थ) वराह एवं (हिरण्यकशिपु के वधार्थ) नृसिंहरूप प्रकट करने वाला असुरारि 'विष्णु' की भाँति वराह-मनुष्य-सिंह एवं मृगों को प्रकट करने वाला था, जो महर्षि कपिल द्वारा अधिष्ठित (प्रतिपादित अथवा आश्रित) सांख्य-दर्शन की भाँति 'कपिलाओं' अर्थात् गायों द्वारा समाश्रित था, जो 'बलावलीढ' अर्थात् बलवान् (अथवा बल=बलराम द्वारा अवलीढ=अभिभूत) तथा दर्प-युक्त धेनुकासुर से युक्त मथुरा के निकवर्ती वन की भाँति बलशालिनी एवं मतवाली गायों (अथवा हथिनियों) वाला था, जो (पाण्डुवंश में समुत्पन्न महाराज) वत्स के कुल को आनन्दित करने वाले (महाराज) उदयन की भाँति बछड़ों अथवा (मानव) शिशुओं को आनन्दित करने वाला था, जो मुनिजनों

द्वारा (राज्याभिषेक करने के लिए) ग्रहण किये गए कलशों से स्नान कराये जाते हुए 'द्रुम' नामक राजा से युक्त किन्नर-साम्राज्य की भाँति मुनिजनों द्वारा ग्रहण किये गए कलशों से सींचे जाते हुए वृक्षों वाला था, जो समीपवर्तिनी जलवृष्टि वाले ग्रीष्मावसान की भाँति निकटवर्ती जल प्रपातों (झरनों) वाला था, जो 'वन' अर्थात् क्षीरसागरीय जलराशि के 'गहन-मध्य' अर्थात् गम्भीर (गहरे) अभ्यन्तर प्रदेश में सुख की नींद सोये हुए हरि (विष्णु) से युक्त वर्षाकाल की भाँति वनों की गुफाओं के भीतर सुखपूर्वक सोये हुए सिंहों वाला था, जो शिलाखण्डों के आघात से (रावणपुत्र) अक्ष अथवा अक्षयकुमार के अस्थिपिञ्जर को चूर-चूर कर देने वाले (पवनसुत) हनुमान की भाँति पत्थर के टुकड़ों की मार से चूर-चूर कर दिये गए अक्षफलों (बहेड़ा) के अस्थिपिञ्जरों (अर्थात् गुठलियों) वाला था, जो 'अग्निकार्य' अर्थात् दहनव्यापार प्रारम्भ कर देने वाले—खाण्डववन के विनाशार्थ प्रस्तुत (मध्यमपाण्डव) अर्जुन की भाँति प्रारम्भ कर दिये गये अग्निकार्य (देवसन्तर्पणक्रिया) वाला था जो[1] सुरभित विलेपन अङ्गराज से युक्त होकर भी निरन्तर प्रकट होने वाले हविर्धूम की गन्ध वाला था, जो मातङ्गों अर्थात् चाण्डालों के समुदाय से समाश्रित होकर भी पवित्र था, जो समुदित हुए सैकड़ों धूमकेतुओं पुच्छलतारों से युक्त होकर भी उपद्रवविहीन था, और जो परिपूर्ण' 'द्विजपतिमण्डल' (पार्वण चन्द्रबिम्ब) से अलंकृत होने पर भी सदैव आसन्नवर्ती सघन वृक्षों के

---

१. इस वाक्य से अनुच्छेदान्त तक विरोधालंकार का प्रयोग है। परिहारपक्ष इस प्रकार होगा—जो सुरभि (गाय) के विलेपन (गोबर का लेप) से युक्त धरा (पृथ्वी) वाला होकर भी निरन्तर उत्पन्न हविर्धूम की गन्ध से परिपूर्ण था, जो 'मातङ्गकुलों अर्थात् मन्दोन्मत्त गजयूथों से समाश्रित होकर भी पवित्र था, जो उठती हुई सैकड़ों 'धूमकेतुओं' (यज्ञाग्नियों) से युक्त होकर भी उपप्लवहीन था तथा जो पूर्णज्ञानी द्विजपतियों (ब्राह्मणों) के मण्डल (समुदाय) से सनाथ होता हुआ भी सदैव सघन वृक्षों के कारण गहरे अन्धकार वाला था।

कारण अन्धकाराच्छादित था।

**संस्कृत-व्याख्या**—**कलिकालस्य**=कलियुगस्य, **अदृष्टपूर्वम्**=अनवलोकितपूर्वम्, **अनृतस्य**=असत्यस्य, अपरिचितम्, **अनङ्गस्य**=कामस्य, **अश्रुतपूर्वम्**=अनाकर्णितपूर्वम्, **अब्जयोनिम् इव**=अप्सु जातम् अब्जं कमलं तद् योनिः उत्पत्तिस्थान यस्य: स अब्जयोनिः तं पितामहम् इव, **त्रिभुवनवन्दितम्**=त्रयाणां भुवनानां समाहारः त्रिभुवनं त्रिलोकी तेन वन्दितं पूजितम्, **असुरारिम् इव**=असुराणां दैत्यानाम् अरिः रिपुः विष्णुः तम् इव, **प्रकटितवराहनरसिंहरूपम्**=प्रकटितानि प्रकाशितानि वराहाः शूकराः नरसिंहाः पुंस्त्वविशिष्टमृगेन्द्राः रूपाणि मृगाश्च येन तम्, पक्षे प्रकटिते प्रदर्शिते वराहस्य सूकरस्य नरसिंहस्य हिरण्यकशिपुविदारकस्य पुरुषकेसरिणः रूपम् आकृतिः येन तं तादृशम्, **सांख्यम् इव**=सांख्यदर्शनम् इव, **कपिलाधिष्ठितम्**=कपिलाभिः कनकवर्णाभिः गोभिः अधिष्ठितम् पक्षे कपिलेन तदाख्येन मुनिना अधिष्ठितम् आश्रितम्, **मथुरोपवनम् इव**=मथुरायाः एतदाख्यायाः नगर्याः उपवनम् द्वादशवनमध्यमं विपिनं तद् इव, **बलावलीढदर्पितधेनुकम्**=बलेन शक्त्या अवलीढाः संश्लिष्टाः अतएव दर्पिताः गर्विताः धेनुकाः करेण्वः यत्र तम् पक्षे बलेन बलरामेण अवलीढः हतः दर्पितः अभिमानी धेनुकः धेनुकासुरः यत्र तं तादृशम्, **उदयनम् इव**=एतदाख्यं वत्सराजं कौशाम्बीनरेशम् इव, **आनन्दितवत्सकुलम्**=आनन्दितानि हर्षितानि वत्सकुलानि गोवत्ससमूहाः येन तम् पक्षे आनन्दितं हर्षितं वत्सकुलं वत्सदेशीयजनः येन तं तादृशम्, **किंपुरुषाधिराज्यम् इव**=किन्नरराज्यम् इव, **मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्**=मुनिजनैः ऋषिजनैः गृहीताः धृताः यैः कलशाः घटाः तैः अभिषिच्यमानाः संतर्प्यमाणाः द्रुमाः पादपाः यत्र तम्, पक्षे मुनिजनगृहीतकलशैः अभिषिच्यमानः द्रुमः एतन्नामकः अधिपतिः यत्र तं तादृशम्, **निदाघसमयावसानम् इव**=निदाघसमयः ग्रीष्मकालः तस्य अवसानः समाप्तिः तम् इव, **प्रत्यासन्नजलप्रपातम्**=प्रत्यासन्नः समीपस्थः जलप्रपातः निर्झरः यस्य तम् पक्षे प्रत्यासन्नः समीपवर्ती जलप्रपातः जलवर्षणं यस्य तं तादृशम्, **जलधरसमयम् इव**=जलधराणां जलदानां समयः कालः वर्षर्तुः तम् इव, **वनगहनमध्यसुखसुप्तहरिम्**=वने विपिने यद् गहनं गुहा तस्य मध्ये अन्तः सुखं सुखपूर्वकं

सुप्ता शयिताः हरयः सिंहा यत्र तम् पक्षे वनस्य जलस्य यद् गहनं गम्भीरं मध्यं मध्यभागः तत्र सुखं सुप्तः हरिः विष्णुः यत्र तम्, **हनुमन्तम् इव**=मारुतिम् इव, **शिलाशकलप्रहारसंचूर्णिताक्षास्थिनिचयम्** = शिलाशकलस्य प्रस्तरखण्डस्य प्रहारेण आघातेन संचूर्णितः पिष्टः तैलनिष्कासनाय अक्षाणां विभीतकफलानां अस्थिनिचयः बीजसमूहः यत्र तं तादृशम् पक्षे शिलाशकलस्यप्रहारेण संचूर्णितः भञ्जितः अक्षस्य एतदाख्यस्य रावणपुत्रस्य अस्थिनिचयः अस्थिसमूहः येन तं तादृशम्, **खाण्डवविनाशोद्यतार्जुनम् इव**=खाण्डवस्य एतन्नाम्नः वनस्य विनाशे भस्मीकरणे उद्यतः तत्परः यः अर्जुनः कनिष्ठपाण्डवः तम् इव, **प्रारब्धाग्निकार्यम्** = प्रारब्धम् उपक्रान्तम् अग्निकार्यं होमः नवाङ्कुरणाय कुशमुञ्जादिदाहो वा यत्र तम्, पक्षे प्रारब्धम् अग्निकार्यम् अग्नितृप्तिः दाहविघ्ननिवारणे येन तम्, अतः परं विरोधाभासोऽलङ्कारः–**सुरभिविलेपनधरम् अपि**=सुरभिः घ्राणतर्पणं विलेपनम् अङ्गरागं धरति धारयति इति तादृशः तम् अपि, **सततानिर्भूतहव्यधूमगन्धम्**=सततं निरन्तरम् आविर्भूत, हव्यस्य हवनीयद्रव्यस्य धूमगन्धः अग्निकेतनगंधः यस्मिन् तम् सौरभधारणेनाऽपि धूमगन्धप्रकटने विरोधः तत्परिहाराय-सुरभेः गोविलेपनं गोमयं धरतीति अर्थः करणीयः, **मातंगकुलाध्यासितम् अपि**=मातङ्गकुलेन चाण्डालसमूहेन अध्यासितम् आश्रितम् अपि, **पवित्रम्**=पावनम्, चाण्डालाध्यासे पवित्रतायां विरोधः तत्परिहारस्तु, **मातंगकुलेन**=गजसमूहेन, इत्यर्थंकरणेन ज्ञेयः। **उल्लसितधूमकेतुशतम् अपि**=उल्लसितम् उदितं धूमकेतूनाम् उत्पातग्रहाणां शतं समूहः यत्रेति तादृशम् अपि, **प्रशान्तोपद्रवम्**=प्रकर्षेण पूर्णतया शान्तः समाप्तः उपद्रवः उत्पातः यत्र तम्, अत्र धूमकेतूल्लासेऽपि उपद्रवशान्तौ विरोधः तत्परिहाराय उल्लसितं धूमकेतूनां यज्ञाग्नीनां शतं यत्रेत्यर्थः, **परिपूर्णद्विजपतिमण्डलसनाथम् अपि**=परिपूर्णेन षोडशकलेन द्विजपतिमण्डलेन हिमांशुबिम्बेन सनाथं युक्तम् अपि, **सदासंनिहिततरुगहनान्धकारम्**=सदा सर्वदा संनिहितः तरुगहनेषु वृक्षगह्वरेषु अंधकारः तमः यत्र त तादृशम्, अत्र पूर्णचन्द्रनाथेऽपि अन्धकारसत्तायां विरोधः तत्परिहारस्तु परिपूर्णेन ज्ञानसम्पन्नेन द्विजपतिमण्डलेन ब्राह्मणसमूहेन सनाथमिति अनेन प्रकारेण कार्यः, **अतिरमणीयम्**=अत्यन्तमनोहरम्, **अपरम्**=द्वितीयम्, **ब्रह्मलोकम् इव**=

सुरलोकमिव, आश्रमम् = तपोभूमिम्, अपश्यम् = अद्राक्षम् ।

**टिप्पणी**—**अब्जयोनि**-ब्रह्मा, भगवान् विष्णु के नाभिकमल से ब्रह्माजी की उत्पत्ति मानी जाती है । **बलावलीढदर्पितधेनुकम्**—मथुरा के उपवन में बलराम जी ने अभिमानी धेनुकासुर को मारा था, यहाँ आश्रम में गर्वीली धेनुकायें (हथिनियाँ) रहा करती थीं । धेनुकासुर गधे का रूप बनाकर तालवन में रहा करता था, यह अत्यन्त भयंकर दैत्य था । **अवलीढ**-अव+लिह्+क्त । **वनगहनलब्धं**—वन की गुफा के भीतर, जल की गहराई में । भगवान् विष्णु क्षीरसागर के मध्य में आषाढ़ शुक्ल एकादशी से लेकर कार्तिक शुक्ल एकादशी तक शयन करते हैं । वैदिक भाषा में समुद्र का अर्थ है आकाश और विष्णुरूप आदित्य वर्षाकाल में स्वप्न की अवस्था में रहते हैं । विष्णु की पालिकाशक्ति इस समय आवृत्त रहती है । इसीलिए इस बीच में हमारा स्वास्थ्य मन्दाग्नि आदि रोगों से आक्रान्त रहता है । विष्णु के जागरण पर शीतकाल में स्वास्थ्य की वृद्धि होने लगती है । **अभिषिच्यमान**-अभि+षिच्+यक्+शानच् । **अक्ष**—बहेड़ा, रावण का पुत्र जिसे लङ्कादहन के समय हनुमान जी ने मारा था । **अस्थिनिचय**—बहेड़ों की गुठलियों का समूह, हड्डियों का समूह । **अग्निकार्य**—होम या नये अङ्कुरण के लिए कुशा, मूँज आदि के ऊपरी भाग को काट लेने पर आग लगाना, जैसा किसान लोग आज भी ईख के खेतों में किया करते हैं, अग्नि की तृप्ति अर्थात् वनदाह में इन्द्र की ओर से आने वाली बाधा को दूर करना और खाण्डववन का पूरी तरह से दाह होना । **मातंग**—हाथी, चाण्डाल । कश्यप के पुत्र क्रोध की मातङ्ग नामक कन्या से इस जाति का जन्म हुआ है अतः इसे मातङ्ग कहा जाता है । मातङ्ग ऋषि के शाप से एक यक्ष को यह योनि प्राप्त हुई थी अतएव इसे मातङ्गज या मातङ्ग कहते हैं । 'अब्जयोनिमिव' इत्यादि में पूर्णोपमा अलङ्कार है । 'वनगहन' में पुनरुक्तवदाभास अलङ्कार है । 'सुरभि···से लेकर गहनान्धकारम्' तक विरोधाभास अलङ्कार है ।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु

चक्षूरागः कोकिलेषु न परकलत्रेषु, कण्ठग्रहः कमण्डलुषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न कामिनीषु, पक्षपातः कृकवाकुषु न विद्याविवादेषु, भ्रान्तिरनलप्रदक्षिणासु न शास्त्रेषु, वसुसंकीर्तनं दिव्यकथासु न तृष्णासु, गणना रुद्राक्षवलयेषु न शरीरेषु, मुनिबालनाशः क्रतुदीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन। यत्र च महाभारते शकुनिवधः पुराणे वायुप्रलपितम्, वयः परिणामेन द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतश्रवणव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः मूलानामधोगतिः ।

**हिन्दी-अनुवाद**—(और) जिस आश्रम में मलिनता (कालिमा) होमाग्नि के धुएँ में थी (किन्तु लोगों के) आचरण में मलिनता (कौलीन्य अथवा कलङ्क) नहीं थी। मुख की अरुणाई (रक्तचञ्चुत्व) शुकपक्षियों में थी (किन्तु लोगों के) क्रोधों में मुँह का लाल हो जाना नहीं था। तीक्ष्णता (चर्मास्थिभेदनसमर्थशक्ति-विशेष) कुशों के अग्रभागों में थी (किन्तु लोगों के स्वभावों में तीक्ष्णता (क्रूरता) नहीं थी। चञ्चलता (तरलता) केले के पत्तों में थी (किन्तु लोगों के) चित्त में चञ्चलता (वृत्ति-विशेष) नहीं थी। चक्षूराग (नेत्रों की लाली) कोकिलों में था (किन्तु लोगों का) चक्षूराग (आसक्ति या अभिलाष) पराई स्त्रियों में नहीं था। कण्ठग्रह (अर्थात् मुँहकड़े की पकड़) कमण्डलुओं में था (किन्तु लोगों की) गलबाँही सम्भोग-व्यापारों में नहीं थी। मेखलाबन्धन (मौञ्जीमेखला का धारण) व्रतों में था (किन्तु लोगों के) ईर्ष्याजनित कलहों में 'मेखलाबन्धन' (जञ्जीर से बाँधा जाना) नहीं था। स्तनस्पर्श (दुग्धदोहनार्थ थन का छुआ जाना) होमधेनुओं में था किन्तु ललनाओं में (लोगों द्वारा) कुचमर्दन नहीं था। पक्षपात (पंखों का गिरना युद्धरत) कुक्कुट पक्षियों में था (किन्तु लोगों का) पक्षपात (सोपाधिकस्वीकृति या मुँहदेखी) शास्त्रीय विवादों में नहीं था। भ्रान्ति (परिवृत्ति या फेरी लगाना) यज्ञाग्नि की प्रदक्षि-

णालों में थो (किन्तु लोगों की) भ्रान्ति (मिथ्याज्ञान) शास्त्रों में नहीं था। वसुसङ्कीर्तन (अर्थात् धर-ध्रुव-सोमादि आठ देवगणों का उल्लेख) देव सम्बद्ध कथाओं में था (किन्तु) लालच के सन्दर्भ में धन की चर्चा नहीं थी। गणना (संख्या या गिनती) रुद्राक्षवलयों में थी (किन्तु लोगों की) गणना (आदर-भाव या स्पृहा नश्वर) शरीरों में नहीं थी। मुनियों के बालों (केशों) का नाश (कर्तन) यज्ञदीक्षा के कारण था, मृत्यु के कारण मुनियों के बालों (शिशुओं) का नाश (मृत्यु) नहीं था। राम के प्रति (आराध्यत्वेन) अनुराग रामायण (ग्रन्थ-विशेष के अध्ययन) के कारण था, यौवन के कारण रामाओं (सुन्दरियों) के प्रति अनुराग (आसक्ति) नहीं था। मुख पर झुर्रियों का विकार बुढ़ौती के कारण था धन के दुरभिमानवश मुँह पर ऐंठन का रुआब नहीं था।

जिस (जाबालि-आश्रम) में महाभारत में (दुर्योधन के मामा गन्धार नरेश) शकुनि का वध मिलता था (किन्तु आश्रम में शकुनियों अर्थात् पक्षियों का वध नहीं होता था), पुराणग्रन्थों में वायुदेव के कथन मिलते थे (किन्तु आश्रम में वायुविकार के कारण अनर्गल प्रलाप नहीं होता था), 'वयः परिणाम' अर्थात् वृद्धावस्था के कारण 'द्विजपतन' अर्थात् दाँतों का गिरना था (किन्तु आश्रम में द्विजों ब्राह्मणों का चारित्रिक-पतन नहीं होता था), उपवन के चन्दनों में जड़ता (शीतलता) थी (किन्तु आश्रमवासीमुनियों में जड़ता अर्थात् मूर्खता नहीं थी), अग्नियों में भूतिमत्व अर्थात् भस्मयुक्तता थी (किन्तु आश्रमवासी मुनियों में ऐश्वर्यशीलता नहीं थी), हरिणों में गीत सुनने की आसक्ति मिलती थी (किन्तु आश्रमवासियों में संगीत सुनने का अभिलाषातिरेक नहीं था), मयूरों का नृत्यवेला में—पक्षपात (पंखों का पतन) होता था (किन्तु आश्रम-वासी मुनियों में नाचगान के प्रति स्वारस्य नहीं था), भुजंगमों अर्थात् सर्पों का ही भोग (कुण्डली अथवा फण) होता था (किन्तु मुनियों का स्त्र्यादिजनित सुखोपभोग नहीं था), वानरों की श्रीफल (बेल) में इच्छा होती थी। (किन्तु मुनियों की लक्ष्मी रूपोफल अर्थात् भौतिकसुख में अभिलाषा नहीं थी), 'मूलों' अर्थात् पेड़ की जड़ों का ही अधोगमन होता था (किन्तु आश्रमवासी मुनियों

का नरकपात नहीं होता था) ।

**संस्कृत-व्याख्या**—च=अपि च, यत्र=यस्मिन् आश्रमे, मलिनता=मालिन्यम्, हविर्धूमेषु=हविषः धूमेषु हव्यसम्बन्धिधूमकेतनेषु, चरितेषु=आचरणेषु व्यवहारेषु वा न, विशुद्धाचरणत्वादिति भावः । मुखरागः=मुखस्य लपनस्य रागः रक्तिमा, शुकेषु=कीरेषु, कोपेषु=क्रोधेषु न, क्रोधानुदयादिति भावः । तीक्ष्णता=प्रखरता, कुशाग्रेषु=दर्भशिखरेषु, स्वभावेषु=प्रकृतिषु, न, क्रूरतायाः अभावादित्याशयः । चञ्चलता=चपलता, कदलीदलेषु=रम्भापत्रेषु, मनःसु=मानसेषु न, अधीरतायाः अभावात्, चक्षुरागः=चक्षुषोः नयनयोः रागः आरुण्यम्, कोकिलेषु=पिकेषु, परकलत्रेषु=अन्यस्त्रीषु, रागः अनुरोधः आसक्तिः, वा न, तपस्विनामासक्तिविरहात्, कण्ठग्रहः=गलधारणम्, कमण्डलुषु=कुण्डिकासु, सुरतेषु=सम्भोगेषु कण्ठाश्लेषः न, मुनीनां तत्राप्रवृत्तेः । मेखलाबन्धः=मौञ्जीबन्धनम्, व्रतेषु=उपनयनादिदीक्षासु, ईर्ष्याकलहेषु=ईर्ष्या पराभ्युदयाक्षमा तया हेतुभूतया ये कलहाः विग्रहाः तेषु मेखलाबन्धः खड्गबन्धो वा न ईर्ष्याभावात्, स्तनस्पर्शः=कुचसंपर्कः, होमधेनुषु होमाय धेनवः गावः तासु, कामिनीषु=सुन्दरीषु कुचमर्दनं न, विषयानुदयात् । पक्षपातः=पत्रपतनम्, कुक्कवाकुषु=कुक्कुटेषु, विद्याविवादेषु=विद्यार्थं ज्ञानार्थं ये विवादाः गोष्ठ्यः तेषु पक्षपातः निर्णायकस्य अनुचितपक्षस्वीकारः न, निर्णायकानां निष्पक्षत्वात्, भ्रान्तिः=भ्रमणम्, अनलप्रदक्षिणासु=वह्निपरिक्रमासु, शास्त्रेषु=वेदादिषु भ्रान्तिः भ्रमः न, यथार्थज्ञानात् । वसुसंकीर्तनम्=वसूनां देवविशेषाणां संकीर्तनम् चर्चा, दिव्यकथासु=स्वर्गीयाख्यानेषु, तृष्णासु=आकाङ्क्षासु, वसुनः धनस्य संकीर्तनं चर्चा न, ऋषीणां वितृष्णत्वात्, गणना=संख्या, रुद्राक्षवलयेषु=रुद्राक्षमालासु, शरीरेषु=नश्वरदेहेषु गणना आदरः न, तपस्विनां विदेहत्वात्, मुनिबालनाशः=मुनीनां तपस्विनां बालानां कचानां नाशः मुण्डनम्, क्रतुदीक्षया=यज्ञव्रतेन, मृत्युना=मरणेन, बालानां शिशूनां नाशः न, तपोमाहात्म्येनाकालमृत्योरभावात् । रामानुरागः=रामे रामचन्द्रे अनुरागः प्रेम, रामायणेन=वाल्मीकिरचितेन ग्रन्थेन, यौवनेन=तारुण्येन रामासु रमणीषु अनुरागः आसक्तिः न । मुखभङ्गविकारः=मुखस्य लपनस्य भङ्गेन

त्वचादिशैथिल्येन विकारः विकृतिः, **जरया**=वृद्धावस्थया, **धनाभिमानेन**=धनस्य अर्थस्य अभिमानेन गर्वेण मुखस्य भङ्गेन भ्रकुट्यादिभङ्ग्या विकृतिः न, वित्तगर्वयोः उभयोः अभावादिति भावः,च=अपि च,यत्र=आश्रमपदे,**महाभारते**=व्यासप्रणीते ग्रन्थविशेषे, **शकुनिवधः**=शकुनेः दुर्योधनमातुलस्य वधः मरणम्, शकुनिवधकथा महाभारतग्रन्थे, शकुनीनां पक्षिणां वधः आश्रमे न, **पुराणे**=वायुपुराणे, **वायुप्रलपितम्**=वायोः वायुदेवस्य प्रलपितं जल्पितम् आश्रमे वायुना वायुरोगेण प्रलपितं प्रलापो न, **वयः परिणामेन**=वयसः आयुषः परिपाकः परिपक्वता तेन वार्धक्येन इत्यर्थः, **द्विजपतनम्**=द्विजानां पतनं विगलनम् आश्रमे द्विजानां ब्राह्मणानां पतनं चरित्रभ्रष्टता न,**उपवनचन्दनेषु**=उपवनानां विपिनानां चन्दनेषु गन्धसारेषु, **जाड्यम्**=शीतलता, मुनिषु जाड्यं जडता अविवेको वा न। **भूतिमत्त्वम्**=भस्मवत्ता,**अग्नीनां**=वह्नीनाम् मुनीनाम् भूतिमत्त्वं धनसम्पत्ति, मत्ता न, **एणकानाम्**=हरिणानाम्, **गीतश्रवणव्यसनम्**= गीतस्य गानस्य श्रवणे आकर्णने व्यसनम् आसक्तिः, मुनीनां गीतश्रवणव्यसनं न। **शिखण्डिनाम्**=मयूराणाम्, **नृत्यपक्षपातः**=नृत्ये नर्तनसमये पक्षाणां कलापानां पातः पतनम् मुनीनां नृत्यं प्रति उत्कटाभिलाषो न, **भुजङ्गमानाम्**=सर्पाणाम्, भोगः शरीरं, फणा वा, मुनीनां विषयसेवननं न। **कपीनाम्**=मरकटानाम्, **श्रीफलाभिलाषः**=श्रीफलेषु बिल्वफलेषु अभिलाषः इच्छा, मुनीनां लक्ष्मीरूपे फलेऽभिलाषो न। **मूलानाम्**=वृक्षादिकन्दानाम्, **अधोगतिः**=भूतलाधोदेशगमनम्, न तु मुनीनाम् अधोगतिः।

**टिप्पणी–मलिनता**–कालिमा, कलङ्क। मलिन+तल्+टाप्। **मेखला**–आश्रम में ब्रह्मचर्यव्रत में मूंज आदि की बनी हुई पगड़ी पहनी जाती थी, ईर्ष्या के कारण कलह छिड़ने पर एक दूसरे को मारने के लिए तलवार की मूंठ कमर में नहीं लटकाई जाती थी, या जंजीर से एक दूसरे को नहीं बाँधा जाता था। **कृकवाकु**–मुर्गा 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः। **वसु**-देवविशेष, धनसम्पत्ति। **क्रतुदीक्षा**–यज्ञ करने से पूर्व आवश्यक योग्यता प्राप्त करने के लिए जो आवश्यक कर्मसंपादन होता है उसे यज्ञदीक्षा कहते हैं। आश्रम में मुनि लोगों का मुण्डन इसी दीक्षा के कारण होता था, मृत्यु के द्वारा शिशुओं

का विनाश नहीं होता था। पुराण–व्यास रचित वायु पुराण। पुराण अठारह हैं, इनमें वायुपुराण और विष्णुपुराण को आज के इतिहासकार भी बहुत सम्मान देते हैं। द्विज–दाँत, ब्राह्मण। 'दन्तविप्राण्डजा द्विजाः' इत्यमरः। भूति =राख, सम्पत्ति या ऐश्वर्य। भोग–सर्प का शरीर या फण, विषय का उपभोग। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' तथा 'अहेः शरीरं भोगः स्यात्' इति कोषः। अधोगतिः–नीचे जाना, अधःपतन। 'महाभारते से अधोगतिः' तक परिसंख्या अलङ्कार है।

तस्य चैवंविधस्य मध्यभागमलंकुर्वाणस्य, अलक्तकालोहितपल्लवस्य, मुनिजनालम्बितकृष्णाजिनजलकरकसनाथशाखस्य, तापसकुमारिकाभिरालवालदत्तपीतपिष्टपञ्चाङ्गुलस्य, हरिणशिशुभिः पीयमानालवालसलिलस्य, मुनिकुमारकाबद्धकुशचीरदाम्नो हरितगोमयोपलेपनविविक्ततलस्य, तत्क्षणकृतकुसुमोपहाररमणीयस्य, नातिमहतः परिमण्डलतया विस्तीर्णविकाशस्य रक्ताशोकतरोरवश्छायायामुपविष्टम्, उग्रतपोभिर्भुवनमिव सागरैः, कनकगिरिमिव कुलपर्वतैः, क्रतुमिव वैतानवह्निभिः, कल्पन्तदिवसमिव रविभिः, कालमिव कल्पैः, समन्तान्महर्षिभिः परिवृतम्····· ।

**हिन्दी-अनुवाद**–पूर्वोक्त रीति से वर्णित उस (आश्रम) के मध्यभाग वाले वर्तुलाकार प्रदेश को अलंकृत करने वाले, अलक्तक (महावर) की भाँति रक्तवर्णी पल्लवों वाले, मुनिजनों द्वारा लटकाए गए काले मृगचर्मों तथा जलकरकों (कमण्डलुओं) से संवलित शाखाओं वाले, तापसकुमारियों द्वारा मूलभागों पर लगाये गये हरिद्राचूर्ण के अनेक हस्तबिम्बों वाले, मृगशावकों द्वारा पिये जाते हुए थाल्हे के जल वाले, मुनिकुमारों द्वारा बाँधे गये कुशनिर्मित चीर (वस्त्र) की रस्सियों वाले, गीले गोबर के उपलेपन से पवित्र अधस्तल वाले, तत्काल चढ़ाए गए पुष्पोपहार के कारण रमणीय तथा अत्यन्त विशाल न होने पर (भी) चारों ओर से मण्डलाकार होने के कारण विस्तृत अभ्यन्तर प्रदेश (नीचे की जगह) वाले रक्ताशोक वृक्ष की अधोवर्तिनी छाया में बैठे हुए भगवान् जाबालि

को (मैंने) देखा—जो कि सागरों से (परिवृत) लोक के समान कुलपर्वतों अर्थात् प्रत्यन्त भूधरों से (परिवृत) कनकगिरि-सुमेरु के समान वैतान (दक्षिणाग्नि, गार्हपत्य तथा आहवनीय) अग्नियों से (परिवृत) यज्ञ के समान, द्वादश आदित्यों से (परिवृत) प्रलयकालीन दिन के समान तथा कल्पों अथवा कालखण्डों से (परिवृत) अखण्डकालावधि के समान चारों ओर से अत्यन्त तीक्ष्ण तपश्चर्या वाले महर्षियों से घिरे हुए थे।

**संस्कृत-व्याख्या**—**एवंविधस्य**=पूर्वोक्तप्रकारस्य, **तस्य**=आश्रमस्य, **मध्यभागम्**=मध्यप्रदेशम्, **अलंकुर्वाणस्य**=शोभमानस्य, **अलक्तकालोहितपल्लवस्य**=अलक्तकवत् लाक्षावत् आलोहिताः ईषद्रक्ताः पल्लवाः किसलयानि यस्य तस्य, **मुनिजनालम्बितकृष्णाजिनजलकरकसनाथशाखस्य**=मुनिजनैः तपस्विलोकैः आलम्बितानि स्थापितानि यानि कृष्णाजिनानि कृष्णमृगचर्माणि जलकरकाः सलिलकमण्डलवः च तैः सनाथाः समुपेताः शाखाः स्कन्धाः यस्य तस्य, **तापसकुमारिकाभिः**=तपस्विकन्याभिः, **आलवालदत्तपीतपिष्टपञ्चांगुलस्य**=आलवाले आवापे दत्तानि अङ्कितानि पीतपिष्टस्य हरिद्रारूपपटवासचूर्णस्य पञ्चाङ्गुलानि हस्तबिम्बानि यस्य तस्य, **हरिणशिशुभिः**=मृगपोतैः, **पीयमानालवालसलिलस्य**=पीयमानं धीयमानं आलवालस्य आवापस्य सलिलं जलं यस्य तस्य, **मुनिकुमारकाबद्धकुशचीरदाम्नः**=मुनिकुमारकैः तपस्विबालकैः आबद्धं परिवेष्टितं कुशचीराणां दर्भच्छन्नपत्राणां दाम रज्जुः यस्मिन् तस्य, **हरितगोमयोपलेपनविविक्ततलस्य**=हरितगोमयेन नवीनगोपुरीषेण यत् उपलेपनं शोधनं तेन विविक्तं पूतं तलम् अधोभागः यस्य तस्य, **तत्क्षणकृतकुसुमोपहाररमणीयस्य**=तत्क्षणं तत्कालं कृतः यः कुसुमोपहारः पुष्पविसर्जनं रमणीयस्य सुन्दरस्य, **नातिमहतः**=नातिविशालस्य, तथापि **परिमण्डलतया**=परिगतं मण्डलं परिधिः यस्य सः तस्य भावः तत्ता तया गोलाकारतया, **विस्तीर्णावकाशाय**=विस्तीर्णः अतिविस्तृतः अवकाशः अभ्यन्तरप्रदेशः यस्य तस्य, **रक्ताशोकतरोः**=अरुणाशोकवृक्षस्य, **अधश्छायायाम्**=अधस्तनेऽनातपे, **उपविष्टम्**=आसीनम्, **सागरैः**=समुद्रैः, **भुवनम् इव**=जगत् इव, **कुलपर्वतैः**=कुलाचलैः, **कनकगिरिम् इव**=मेरुपर्वतम् इव, **वैतानिकवह्निभिः**=याज्ञिकाग्निभिः, **क्रतुम् इव**=यज्ञम् इव, **रविभिः**=सूर्यैः, **कल्पान्तदिवसम् इव**

=प्रलयदिनम् इव, कल्पैः=चतुर्दशमन्वन्तरात्मकैः सहस्रयुगैः, कालम् इव= समयम् इव, उग्रतपोभिः=उग्रं तीव्रं तपःतपस्या येषां तैः तादृशैः,महर्षिभिः= तपस्विभिः, समन्तात्=परितः, परिवृतम्=परिवेष्टितम् ।

**टिप्पणी**–अलङ्कुर्वाणस्य–अलं+कृ+शानच्, ष० ए० व० । अलक्तक– लाक्षारस, लाख । जलकरक–कमण्डलु, करवा । 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपलेन स्त्रीकरङ्के च कमण्डलौ' 'इति मेदिनी । पीतपिष्ट- पञ्चांगुल–पीली पीसी हुई हल्दी की लेप बनाकर उसके थापे वृक्ष के थालहे पर लगा दिये गये थे । पानी के दोष से बचने के लिये, दैवी प्रकोप की शान्ति के लिये आज भी कुमारिकाएँ हल्दी के या गोबर के थापों को घरों में लगाती हैं । पीयमान—पा+यक्+शानच् । विविक्त—शुद्ध, पवित्र । कुलपर्वतैः–सातकुला- चल महेन्द्र, मलय, सह्य, शक्तिमान्, ऋक्षवान्, विन्ध्य एवं पारियात्रिक । कल्पान्त–प्रलय, 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः । परिवृतम्–परि+वृ+क्त । यहाँ मालोपमा अलंकार है ।

···उग्रशापभीतयेव कम्पितदेहया प्रणयिन्येव विहितकेशग्रहया क्रुद्धयेव कृतभ्रूभङ्गया मत्तयेवाकुलितगमनया प्रसाधितयेव प्रकटित- तिलकया जरया गृहीतव्रतयेव भस्मधवलया धवलीकृतविग्रहम्, आ- यामिनीभिः पलितपाण्डुराभिस्तपसा विजित्य मुनिजनमखिलं धर्म- पताकाभिरिवोच्छ्रिताभिरमरलोकमारोढुं पुण्यरज्जुभिरिवोपसंगृही- ताभिरतिदूरप्रवृद्धस्य पुण्यतरोः कुसुममञ्जरीभिरिवोद्गताभिर्जटा- भिरुपशोभितम्, उपरचितभस्मत्रिपुण्ड्रकेण तिर्यक्प्रवृत्तत्रिपथगास्रोत- स्त्रयेण हिमगिरिशिलातलेनेव ललाटफलकेनोपेतम्,····

**हिन्दी-अनुवाद**–जो कि मानो (महर्षि जाबालि के) दारुण शाप से डरी हुई अतएव देह कँपानेवाली, मानो (महर्षि जाबालि की) प्रणयिनी होने के कारण (रतिकलहवश) केश पकड़ने वाली अर्थात् महर्षि के केशों को श्वेत बना देनेवाली, मानो क्रोधाविष्ट होने के कारण टेढ़ी चितवन वाली अर्थात्

महर्षि की भौंहों को विकृत कर देने वाली, मानो उन्मादिनी होने के कारण लड़खड़ा कर चलनेवाली अर्थात् महर्षि को स्खलद्गति बना देनेवाली मानो सजी-धजी दुलहिन होने के कारण (अपना) तिलक अर्थात् बिंदिया दिखाने वाली अर्थात् महर्षि की देह में काले तिलों को उत्पन्न कर देने वाली तथा मानो व्रतधारिणी होने के कारण भस्म मलने से धवल बनी हुई अर्थात् भस्म के समान धवल वृद्धावस्था से शुभ्रीकृत शरीर वाले थे। जो (महर्षि जाबालि) विस्तार युक्त, वार्द्धक्यजनित शुक्लता के कारण पाण्डुर (श्वेत) वर्णवाली, समस्त मुनिजनों को (अपनी) तपोराशियों से जीतकर (सौभाग्यप्रदर्शनार्थं) ऊपर फहराई गई धर्मपताकाओं-सी प्रतीत होने वाली स्वर्गारोहण के निमित्त बटोरी गयी पुण्यरज्जुओं सी प्रतीत होने वाली तथा बहुत दूर तक बढ़े हुए तपश्चरण रूपी वृक्ष की—प्रादुर्भूत हुई—पुष्पवल्लरियों सी प्रतीत होने वाली जटाओं से शोभायमान थे। जो कि तिरछे (परस्पर पृथक्) होकर बहने वाले त्रिपथ गङ्गा के (ऊपर नीचे तथा समानान्तर (स्थित) तीन स्रोतों से युक्त हिमगिरि का शिलातल प्रतीत होने वाले भस्मनिर्मित त्रिरेखामय तिलक वाले भाल प्रदेश से संयुक्त थे।

**संस्कृत-व्याख्या**—**उग्रशापभीतया इव**=उग्रेण कठिनेन शापेन अभिसम्पातेन भीता त्रस्ता तया, नायिकया इति शेषः, इव, **कम्पितदेहया**=कम्पितः चलितः देहः शरीरं यया तया, नायिकापक्षे कम्पितः देहः यस्याः सा तया, **प्रणयिन्या इव** =प्रेमवत्या इव, **विहितकेशग्रहया**=विहितः केशानां कचानां ग्रहः धवैत्यापादानेन ग्रहणं यया तया नायिकापक्षे विहितः केशग्रहः रतिकाले कचग्रहणं यया तया, **क्रुद्धया**=कुपितया इव, **कृतभ्रूभङ्गया**=कृतः भ्रुवोः भ्रूलतयोः भङ्गः शैथिल्यं यया तया, नायिकापक्षे-कृतः भ्रूभङ्गः भ्रुकुटीकौटिल्यं यया तया, **मत्तया इव**= उन्मादिन्या इव **आकुलितगमनया**=आकुलितम् उच्चावचीकृतं गमनं गतिः यया तया नायिकापक्षे आकुलितं मदपानेन स्खलितं गमनं यस्याः सा तया, **प्रसाधितया इव**=अलङ्कृतया इव, **प्रकटितिलकया**=प्रकटिताः प्रकाशिताः तिलकाः श्यामवर्णचिह्नानि यया तया, नायिकापक्षे प्रकटितं प्रदर्शितं तिलकं भालबिन्दुः यया तया इव, **गृहीतव्रतया इव**=गृहीतं धृतं व्रतं नियमः यया तया इव, भस्म-

धवलया=भस्म भूतिः तद्वत् धवलतया श्वेतया नायिकापक्षे भस्मना अङ्गलिप्तेन भसितेन धवलया धूसरया, जरया=वृद्धावस्थया, धवलीकृतविग्रहम्=अधवलः धवलः कृत इति धवलीकृतः शुभ्रीकृतः विग्रहः देहः यस्य ·म्, आयामिनीभिः=दीर्घाभिः, पलितपाण्डुराभि=पलितं जरया शौक्ल्यं तेन पाण्डुराभिः श्वेताभिः, अखिलम्=समस्तम्, मुनिजनम्=तपस्विगणम्, तपसा=तपश्चर्यया, विजित्य=जित्वा, उच्छ्रिताभिः=ऊर्ध्वीकृताभिः, धर्मपताकाभिःइव=पुण्यकेतुभिः इव, अमरलोकम्=स्वर्गलोकम्, आरोढुम्=आरोहणं कर्तुम्, उपसंगृहीताभिः=अङ्गीकृताभिः, पुण्यरज्जुभिः इव=पवित्रप्रग्रहैः इव, अतिदूरप्रवृद्धस्य=अत्यधिकम् एधितस्य, पुण्यतरोः=पुण्यम् सुकृतम् एव तरुः वृक्षः तस्य धर्मवृक्षस्य, उद्गताभिः=प्रादुर्भूताभिः,कुसुममञ्जरीभिः इव=पुष्पवल्लरीभिःइव, जटाभिः=सटाभिः, उपशोभितम्=विभूषितम्, उपरचितभस्मत्रिपुण्ड्रकेण=उपरचितं विहितं भस्मनः भूतेः त्रिपुण्ड्रकं तिर्यग्रेखातिलकं यत्र तेन, अतएवात्रोत्प्रेक्षते-तिर्यक्प्रवृत्तत्रिपथगास्रोतस्त्रयेण=तिर्यक् कुटिलं प्रवृत्तं प्रचलितं त्रिपगायाः गङ्गायाः स्रोतस्त्रयं त्रिप्रवाहः यत्र तादृशेन, हिमगिरिशिलातलेन इव=हिमगिरेः हिमाचलस्य शिलातलं पाषाणपटलं तेन इव, ललाटफलकेन=भालपट्टेन, उपेतम्=संयुक्तम् ।

टिप्पणी-उग्रशाप-क्रोध में कहा गया कठोर वचन । तिलक-वृद्धावस्था में पड़ने वाले शरीर के काले मस्से, मस्तक की बन्दी । पलित-बुढ़ापे के कारण शरीर के बालों में आने वाली सफेदी 'पलितं जरया शौक्ल्यम्' इत्यमरः । विजित्य-वि+जि+क्त्वा—ल्यप् । आरोढुं-आ+रुह्+तुमुन् । उच्छ्रिता-ऊपर को उठाई गयी, फहराई गयी पताका । त्रिपथगा=तीन मार्गों से चलने वाली गङ्गा, आकाशगङ्गा व पातालगङ्गा रूप में गङ्गा के बहने के तीन मार्ग हैं । प्रस्तुत प्रकरण में हिमालय पर ही उनके तीन वक्र स्रोतों के बहने की उत्प्रेक्षा की गई है जो ललाट का उपमान है । यहाँ पूर्णोपमा, उत्प्रेक्षा एवं रूपक अलंकार हैं ।

…अधोमुखचन्द्रकलाकाराभ्यामवलम्बितबलिशिथिलाभ्यां भ्रूल-

ताभ्यामवष्टभ्यमानदृष्टिम्, अनवरतमन्त्राभ्यासविवृताधरपुटतया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रियवृत्तिभिरिव विद्यागुणैरिव करुणारसप्रवाहैरिव दशनमयूखैर्धवलितपुरोभागम्, उद्वमदमलाङ्गाप्रवाहमिव जह्नुम्, अनवरतसोमोद्गारसुगन्धिनि श्वासावकृष्टैर्मूर्तिमद्भिः शापाक्षरैरिव सदा मुखभागसंहितैः परिस्फुरद्भिरलिभिरविरहितम्, अतिकृशतया निम्नतरगण्डगर्तम्, उन्नततरहनुघोणम् आकरालतारकम्, अवशीर्यमाणविरलनयनपक्ष्ममालम्, उद्गतदीर्घरोमरुद्धश्रवणविवरम्, आनाभिलम्बितकूर्चकलापमाननमादधानम्,...... ।

**हिन्दी-अनुवाद**–जो अधोमुखी चन्द्रकलाओं के आकार के समान आकार वाली तथा (वार्द्धक्य के कारण) आश्रित त्रिवलियों (झुर्रियों) के कारण शिथिलीभूत भ्रूलताओं से अवरुद्ध दृष्टि वाले थे, जो निरन्तर मन्त्राक्षरों का अभ्यास (पौनः पुन्येन उच्चारण) करने से खुले हुए दोनों होठ वाले होने के कारण बाहर निकलते हुए अत्यन्त परिपूत सत्याङ्कुरों के समान निर्मल इन्द्रिय प्रवृत्तियों के समान (दयादाक्षिण्यादि) विद्या गुणों के समान तथा करुणारस की धाराओं के समान दन्तकिरणों के शुभ्रीकृत सम्मुखभाग वाले अतएव निर्मल गंगाधारा का उद्वमन करने वाले (महाराज) जह्नु के समान थे, जो निरन्तर (यज्ञों में पिये गये) सोमरस के उद्गारों (डकारों) से सुगन्धित निःश्वासों से आकर्षित किये गये, मूर्तिमान् शाप के अक्षरों के समान (अर्थात् कृष्णवर्ण) तथा सर्वदा मुखाग्रभाग से सटकर सञ्चरण करनेवाले मधुकरों से संवलित-अत्यन्त दुबले पतले होने के कारण बहुत गहरे गाल के गड्ढों वाले अत्यन्त ऊँची दाढ़ी तथा नासिका वाले-कुछ टेढ़ी अथवा (भयावह) नेत्रकनीनिकाओं वाले (वार्द्धक्यवश) झड़ती हुई तथा विरलीभूत नेत्रों की बरौनियों के समूहों वाले उगे हुए लम्बे रोओं (बालों) से ढके हुए कर्णविवरों वाले तथा नाभिपर्यन्त लटकते हुए दाढ़ियों के समूह वाले मुखमण्डल को धारण कर रहे थे ।

**संस्कृत-व्याख्या**–**अधोमुखचन्द्रकलाकाराभ्याम्**=अधोमुखी निम्नाश्रिता या चन्द्रकला सुधांशुलेखा तस्याः आकारः इव आकारः स्वरूपं ययोः ताभ्याम्, **अवलम्बितवलिशिथिलाभ्याम्**=अवलम्बिता आश्रिता या बलिः शिथिलचर्मरेखा तया शिथिलाभ्याम् अधःश्लथाभ्याम्, **भ्रूलताभ्याम्**=कोमलभ्रूभ्याम्, **अवष्टभ्यमानदृष्टिम्**=अवष्टभ्यमाना अवलम्ब्यमाना दृष्टिः दर्शनसामर्थ्यं यस्य तं तादृशम्, **अनवरतमन्त्राभ्यासविवृताधरपुटतया**=अनवरतं सततं यः मन्त्राभ्यासः मन्त्रजपः तेन विवृतं व्यात्तम् अधरपुटम् ओष्ठसंपुटं यस्य तस्य भावः तत्ता तया, **निष्पतद्भिः**=निर्गच्छद्भिः, **अतिशुचिभिः**=अत्यन्तस्वच्छैः, **सत्यप्ररोहैः इव**=सत्यस्य तथ्यस्य प्ररोहाः अंकुराः तैः इव, **स्वच्छेन्द्रियवृत्तिभिः इव**=स्वच्छाः या इंद्रियवृत्तयः इन्द्रियव्यापाराः ताभिः इव, **विद्यागुणैः इव**=विद्यानाम् आन्वीक्षिक्यादीनां गुणैः विनयादिभिः इव, **करुणारसप्रवाहैः इव**=करुणा एव रसः निर्यासः तस्य प्रवाहैः इव स्रोतोभिः इव, **दशनमयूखैः**=दशनानां दन्तानां मयूखैः रश्मिभिः, **धवलितपुरोभागम्**=धवलितः श्वेतीकृतः पुरोभागः अग्रप्रदेशः येन तं तादृशम्, अतएव **उद्वमदमलगंगाप्रवाहम्**=उद्वमन् उद्गच्छन् अमलः स्वच्छः गङ्गाप्रवाहः भागीरथीस्रोतः यस्मात् तं तादृशम्, **जह्नुम् इव**=एतदाख्यं मुनिम् इव,**अनवरतसोमोद्गारसुगन्धिनिश्वासावकृष्टैः**=अनवरतं सततं यः सोमोद्गारः सोमपानेन प्रकटितः वायुजनितशब्दः तेन सुगन्धिः सौरभः यः निश्वासः वायुनिर्गमः तेन अवकृष्टैः आकृष्टैः, **मूर्तिमद्भिः**=शरीरधारिभिः, **शापाक्षरैः इव**=शापवर्णैः इव, **सदा**=निरन्तरम्, **मुखभागसंनिहितैः**=मुखभागे लपनप्रदेशे संनिहितैः पार्श्वस्थैः, **सद्भिः**, **स्फुरद्भिः**=सञ्चरद्भिः, **अलिभिः**=मधुकरैः, **अविरहितम्**=सश्लिष्टम्, **अतिकृशतया**=अत्यन्तक्षीणतया, **निम्नतरगण्डगर्तम्**=निम्नतरौ गम्भीरतरौ गण्डयोः कपोलयोः गर्तौ अवटीभूतौ यत्र तत् तादृशम्, **उन्नततरहनुघोणम्**=उन्नततरे उच्चतरे हनुः चिबुकं घोणा नासिका च यत्र तत् तादृशम्, **आकरालतारकम्**=आ ईषत् कराले वक्रे तारके कनीनिके यत्र तत् तादृशम्, **अवशीर्यमाणविरलनयनपक्ष्ममालम्**=अवशीर्यमाणे क्षीयमाणे अतएव विरले असान्द्रे नयनयोः नेत्रयोः पक्ष्ममाले लोमराजी यत्र तत् तादृशम्,

उद्गतदीर्घरोमरुद्धश्रवणविवरम्=उद्गतानि उत्पन्नानि यानि दीर्घरोमाणि विस्तृतलोमानि तैः रुद्धे आवृते श्रवणयोः कर्णयोः विवरे छिद्रे यत्र तत् तादृशम्, आनाभिलम्बितकूर्चकलापम्=आनाभेः नाभिपर्यन्तं लम्बितः वेल्लितः कूर्चकलापः श्मश्रुसमूहः यत्र तत् तादृशम्, आननम्=मुखम्, आदधानम्=धारयन्तम् ।

टिप्पणी–वलि–शिथिलचर्म, 'वलिर्दैत्यप्रभेदे च करचामरदण्डयोः, । उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि' ।। इति मेदिनी । अधरपुट–ओष्ठपुट, दोनों होठ । सत्यप्ररोहः—सत्य के अंकुर । सत्य को श्वेत मानकर दन्त-किरणों के लिए सत्य के अंकुरों की उत्प्रेक्षा की गई है । इसी प्रकार स्वच्छ इन्द्रिय-वृत्तियों और करुण रस के प्रवाह को श्वेत मानकर उनकी उत्प्रेक्षा की गई है । उद्वमद्···जह्नुम्–मुख से निकलती हुई सफेद किरणों को गङ्गा मानकर जाबालि की जह्नु ऋषि से उपमा दी गई है । भगीरथ की प्रार्थना पर शिव की जटाओं में आती हुई गंगा जब जह्नु ऋषि की कुटिया को बहाने लगीं जह्नु ने उसका पान कर लिया । पुनः भगीरथ के अनुनय विनय पर जह्नु ने गंगा को बाहर निकाला, उस समय की उपमा यहाँ जाबालि के लिए दी गई है । आदधानम्–आ+धा+शानच् । शापाक्षरैरिव–यहाँ गुणोत्प्रेक्षालङ्कार है । इसके अतिरिक्त लुप्तोपमा, काव्यलिङ्ग, उपमा आदि अलङ्कार हैं ।

—अतिचपलानामिन्द्रियाश्वानामन्तःसंयमनरज्जुभिरिवाततताभिः कण्ठनाडीभिर्निरन्तरावनद्धकन्धरम्, समुन्नतविरलास्थिपञ्जरम्, अंसावलम्बितधवलयज्ञोपवीतम्, अनिलवशजनिततनुतरङ्गभङ्गमुत्प्लवमानमृणालमिव मन्दाकिनीप्रवाहमकलुषमङ्गमुद्वहन्तम्, अमलस्फटिकसकलघटितमक्षवलयमत्युज्ज्वलस्थूलमुक्ताफलग्रथितं सरस्वतीहारमिव चलदंगुलिविवरगतमावर्तयन्तम्, अनवरतभ्रमितताराकाचक्रमपरमिव ध्रुवम्···,

हिन्दी-अनुवाद—जो कि अत्यन्त चञ्चल इन्द्रिय रूपी अश्वों को भीतर ही भीतर संयमित करने के लिए लगामों की भाँति फैली हुई गले की नसों से निरन्तर जकड़े हुए ग्रीवा प्रदेश वाले उभरे तथा छितराए हुए अस्थिपञ्जरों वाले-कन्धे पर लटकते हुये धवल यज्ञोपवीत (जनेऊ) वाले अतएव हवा के प्रभाव से उत्पन्न सूक्ष्म एवं टटली लहरों वाले तथा तैरते हुये नूतन श्वेत-कमल युक्त मन्दाकिनी के जलप्रवाह की भाँति निष्कलङ्क शरीर को धारण कर रहे थे। जो कि अत्यन्त धवल तथा बृहदाकार मोतियों के मनकों से गूँथे गये देवी सरस्वती के हार के समान स्वच्छ स्फटिक शिलाखण्डों से निर्मित तथा (जपविधि में) घूमती हुई उंगलियों के मध्यवर्ती विवरस्थान में विद्यमान जपमाला को फेरते हुए अतएव निरन्तर परिक्रमा करने वाले नक्षत्रमण्डल से युक्त द्वितीय ध्रुव (नक्षत्रविशेष) सरीखे थे।

संस्कृत-व्याख्या—अतिचपलानाम्=अतीवचञ्चलानाम्, इन्द्रियाश्वानाम्=इन्द्रियाणि एव अश्वा: घोटका: तेषाम्, अन्त:संयमनरज्जुभि: इव=अन्त: मध्ये संयमनाय बन्धनाय रज्जुभि: इव, आतताभि:=विस्तृताभि:, कण्ठनाडीभि:=गलशिराभि:, निरन्तरावनद्धकन्धरम्=निरन्तरं सान्द्रं यथा स्यात् तथा अवनद्धा बद्धा कन्धरा ग्रीवा यस्मिन् तत्, समुन्नतविरलास्थिपञ्जरम्=समुन्नतम् ऊर्ध्वंगतं विरलम् अनिबिडम् अस्थिपञ्जरं कङ्कालं यस्य तत्, अंसावलम्बितधवलयज्ञोपवीतम्=अंसे वामस्कन्धे अवलम्बितं लम्बमानं धवलं शुभ्रं यज्ञोपवीतं यज्ञसूत्रं यस्मिन् तत् तादृशम्, अतएव अनिलवशजनिततनुतरङ्गभङ्गम्=अनिलवशेन वायुप्रभावेण जनिता: तनव: लघव: तरङ्गभङ्गा: कल्लोलखण्डा: यत्र तत् तादृशम्, उत्प्लवमानमृणालम्=उत्प्लवमानं संतरत् मृणालं कमलनालं यत्र तत् तादृशम्, मन्दाकिनीप्रवाहम् इव=गङ्गास्रोत: इव, अकलुषम्=निर्मलम् निष्पापम्, अङ्गम्=शरीरम्, उद्वहन्तम्=धारयन्तम्, अत्युज्ज्वलस्थूलमुक्ताफलग्रथितम्=अत्युज्ज्वलानि अतिनिर्मलानि स्थूलानि पृथुलानि यानिमुक्ताफलानि मौक्तिकानि तै: ग्रथितं गुम्फितम्, सरस्वतीहारम् इव=सरस्वत्या: भारत्या: हार: मुक्तावली तम् इव, चलदङ्गुलिविवरगतम्=चलन्तीनां स्पन्द-

मानानाम् अङ्गुलीनां करावयवानां विवरगतं छिद्रस्थितम्, **अमलस्फटिकशकलघटितम्**=अमलानि स्वच्छानि यानि स्फटिकशकलानि स्फटिकखण्डानि तैः घटितं रचितम्, **अक्षवलयम्**=अक्षमालाम्, **आवर्तयन्तम्**=भ्रामयन्तम्, अतएव **अनवरतभ्रमिततारकाचक्रम्**=अनवरत सततं भ्रमितं पर्यटितं तारकाचक्रं नक्षत्र मण्डलं येन तम्, **अपरम्**=द्वितीयम्, **ध्रुवम् इव**=उत्तानपादजम् इव ।

**टिप्पणी–अवरुद्ध**–कसकर बँधी हुई । **उत्प्लवमानमृणालम्**–तैरता हुआ कमलनाल । उभरते हुये अस्थिपञ्जर पड़े हुए यज्ञोपवीत के लिये वायुवंश उत्पन्न तरङ्गों वाले गङ्गाप्रवाह पर तैरते मृणाल की उपमा जहां दृश्यसाम्य की कुशलता को प्रस्तुत करती है, वहीं शरीर व यज्ञोपवीत की पावनता व स्वच्छता का भी स्पष्ट संकेत देती है । **शकल**–टुकड़ा, माला के दाने बनाने के लिये किये गये स्फटिकमणि के छोटे-छोटे टुकड़े । **अनवरत···ध्रुवम्**–उत्तर दिशा में विद्यमान ध्रुव प्रवहपवन के द्वारा सारे नक्षत्र मण्डल को घुमाता है। कहा भी गया है–'भयकृद्ध्रुवयोर्बद्ध माक्षिप्तप्रवहानिलैः । पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ।' **"अमल ध्रुवम्"** में उपमा, काव्यलिङ्ग तथा द्रव्योत्प्रेक्षा की संसृष्टि है ।

···उन्नमता शिराजालकेन जरत्कल्पतरुमिव परिणतलतासंचयेन निरन्तरनिचितम्, अमलेन चन्द्रांशुभिरिवामृतफेनैरिव गुणसन्तान तन्तुभिरिव निर्मितेन मानससरोजलक्षालनशुचिना दुकूलवल्कलेन द्वितीयेनेव जराजालकेन संछादितम्, आसन्नवर्तिना मन्दाकिनीसलिलपूर्णेन त्रिदण्डोपविष्टेन स्फाटिककमण्डलुना विकचपुण्डरीकराशिमिव राजहंसेनोपशोभमानम्, स्थैर्येणाचलानां गाम्भीर्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाम्बरतलस्य संविभागमिव कुर्वाणम्,···

**हिन्दी-अनुवाद**–जो परिपक्व लताजाल से निरन्तर जकड़े हुए प्राचीन कल्पद्रुम की भाँति ऊपर की ओर उभरी हुयी धमनियों के समूह से निरन्तर

**लपूर्णेन**=गंगाजलसंभृतेन, **त्रिदण्डोपविष्टेन**=त्रयो दण्डाः सन्ति अस्येति त्रिदण्डः–त्रिपादिका तत्र उपविष्टेन स्थितेन, **स्फाटिककमण्डलुना**=स्फटिकस्य अयं स्फाटिकः स चासौ कमण्डलुः तेन–स्फटिकमणिमयकुण्डया उपशोभमानम्, **स्थैर्येण**=स्थिरतया, **अचलानाम्**=गिरीणाम्, **गाम्भीर्येण**=गम्भीरतया, **सागराणाम्**=समुद्राणाम्, **तेजसा**=प्रतापेन, **सवितुः**=दिनकरस्य, **प्रशमेन**=शान्त्या, **तुषाररश्मेः**=तुषारः हिमं तद्वत् रश्मयः किरणाः यस्य तस्य हिमांशोः, **निर्मलतया**=स्वच्छतया, **अम्बरतलस्य**=गगनतलस्य, **संविभागम्**=सविभाजनं, **कुर्वाणाम्**=विदधानम् ।

**टिप्पणी–निचित**–अभिव्याप्त । **दुकूलवल्कल**–रेशमी वस्त्र के समान महीन छाल का वस्त्र । **जराजालक**–बुढ़ापे का समूह । **त्रिदण्ड**–तीन डण्डों को ऊपर से बांधकर खड़ी की गयी तिपाही जिस पर कमण्डलु रखा था । **उपशोभमानम्**–उप+शुभ्+शानच् । **संविभागमिव**–मानों वितरण-सा,दान-सा । 'पुण्डरीकराशिमिव, में उपमालङ्कार है । 'कुर्वाणमिव में क्रियोत्प्रेक्षा अलङ्कार है ।

वैनतेयमिव स्वप्रभावोपात्तद्विजाधिपत्यम्, कमलासनमिवाश्रम-गुरुम्,जरच्चन्दनतरुमिव भुजङ्गनिर्मोकधवलजटाकुलम्, प्रशस्तवा-रणपतिमिव प्रलम्बकर्णवालम्,बृहस्पतिमिवाजन्मसंवर्धितकचम्,दिव-समिवोद्यदर्कबिम्बभास्वरमुखम्, शरत्कालमिव क्षीणवर्षम्, शान्तनु-मिव प्रियसत्यव्रतम्, अम्बिकाकरतलमिव रुद्राक्षग्रहणनिपुणम्,शिशि-रसमयसूर्यमिव कृतोत्तरासङ्गम्, वडवानलमिव संततपयोभक्षम्, शून्यनगरमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमा-श्लिष्टशरीरं भगवन्तं जाबालिमपश्यम् ।

**हिन्दी अनुवाद**–जो अपने प्रभाव (पराक्रम) से समस्त 'द्विजों' अर्थात् पक्षियों का स्वामित्व प्राप्त करने वाले विनतानन्दन गरुड की भाँति अपने (तपः) प्रभाव से समस्त ब्राह्मणों का प्रभुत्व प्राप्त कर चुके थे । जो ब्रह्मचर्य गार्हस्थ्य, वानप्रस्थ एवं संन्यास वर्णाश्रमों के प्रवर्तक कमलासन- ब्रह्मा की

भाँति आश्रम (तपोवन) के गुरु थे । जो सर्पकञ्चुकों के कारण धवलभूत मूल-भागों से परिव्याप्त पुराने चन्दनतरु की भाँति सर्पकञ्चुकी जैसी श्वेत जटाओं से संकुल थे । जो अत्यधिक लम्बे कानों तथा (पूँछ के) बालों वाले सर्वलक्ष-णोपेत गजराज की भाँति लम्बे कर्णकेशों वाले थे । जो जन्मकाल से ही (अपने पुत्र) कुमार कच का संवर्धन अर्थात् पालन-पोषण करने वाले, देवगुरु बृहस्पति की भाँति जन्मकाल से ही केश बढ़ाये हुये थे । जो उदीयमान सूर्यमण्डल के कारण देदीप्यमान मुखभाग (अर्थात् प्रभातवेला) वाले दिन की भाँति उदीय-मान रविबिम्ब के समान कान्तिमान् मुखवाले थे । जो स्वल्प जलवृष्टि वाले शरत्काल की भाँति बीते हुए वर्षों वाले अर्थात् अत्यन्त वृद्ध थे । जो वल्लभ-भूत (मनपसन्द) सत्यव्रत-भीष्म वाले (उनके पिता महाराज) शान्तुनु की भाँति सत्यरूपी व्रत के पक्षधर थे । जो (रतिवेला में अपरिहार्य चन्द्रकला के कारण) भगवान् शंकर के नेत्र उपहित कर देने में चतुर देवी पार्वती के करतल की भाँति रुद्राक्षमाला ग्रहण करने (फेरने) में प्रवीण थे । जो उत्तर दिशा का 'आसङ्ग' (आश्रय) लेने वाले अर्थात् उत्तरायणभूत शीतकालीन सूर्य की भाँति उत्तरीय वस्त्र धारण किये थे । जो निरन्तर (सागर) जल का भक्षण करने वाले वाडवाग्नि की भाँति निरन्तर दुग्धाहारी थे । जो दीन (शोभाहीन) अनाथ स्वामिहीन एवं विपन्न (विपत्तिग्रस्त) शरणों (घरों) वाले सूनसान उजड़े नगर की भाँति दुःखियों, अनाथों एवं (व्याधि आदि से) विपत्तिग्रस्तों के परित्राण हेतु थे । जो भस्म (मलने) के कारण धवलभूत तथा देवी पार्वती द्वारा आलिङ्गित शरीर वाले पशुपति भगवान् शंकर की भांति भस्म जैसे श्वेत रोम समूह से संकुल शरीर वाले थे ।

**संस्कृत-व्याख्या—वैनतेयम् इव**—गरुडम् इव, **स्वप्रभावोपात्तद्विजाधिपत्यम्**= स्वस्य आत्मनः प्रभावेण उपात्तं अर्जितं द्विजानां ब्रह्मणानाम् आधिपत्यं स्वमित्वं येन स तं तादृशम्, वैनतेयपक्षे स्वप्रभावेण उपात्तं द्विजानां पक्षिणाम् आधिपत्यं येन स तादृशम्, **कमलासनं**=कमलम् आसनं यस्य सः ब्रह्मा तम् इव, **आश्र-मगुरुम्**=आश्रमस्य तपोभूमेः गुरुम् आचार्यम्, कमलासनपक्षे आश्रमाणां ब्रह्मचर्यादीनां गुरुः नियामकम्, **जरच्चन्दनतरुम् इव**=जरन् पुरातनः यः चन्द-

नतरुः मलयजपादपः तम् इव, **भुजङ्गनिर्मोकधवलजटाकुलम्**=भुजङ्गानां सर्पाणां निर्मोकाः कञ्चुकाः तद्वत् धवलाभिः श्वेताभिः जटाभिः सटाभिः आकुलं व्याप्तम्, चन्दनतरुपक्षे भुजङ्गनिर्मोकैः धवलाः श्वेताः जटाः वृक्षमूलानि ताभिः आकुलं अभिव्याप्तम्, **प्रशस्तवारणपतिं इव**=प्रशस्तः प्रख्यातः यः वारणपतिः गजेन्द्रः तम् इव, **प्रलम्बकर्णबालं**=प्रलम्बाः, दीर्घाः कर्णौ श्रोत्रे बालाः पुच्छकेशाश्च यस्य तम्, **बृहस्पतिम् इव**=सुरगुरुम् इव, **आजन्मसंवर्धितकचम्**= आजन्मनः जीवनधारणादारभ्य संवर्धिताः क्षौराभावात् वृद्धिं प्रापिताः कचाः बालाः येन स तम्, बृहस्पतिपक्षे, **आजन्मतः**=संवर्धिताः पोषितः कचः एतदाख्यः स्वपुत्रः येन तम्, **दिवसम् इव**=दिनम् इव, **उद्यदर्कबिम्बभास्वरमुखम्**= उद्यत् उद्गच्छत् यत् अर्कबिम्बं रविमण्डलं तद्वत् भास्वरं तेजस्वि मुखं लपनं यस्य तम् तादृशम्, दिवसपक्षे उद्यता उद्गच्छता अर्कबिम्बेन भास्वरं प्रभाशीलं मुखम् आद्यभागो यस्य स तं तादृशम्, **शरत्कालम् इव**=शरत्समयम् इव, **क्षीणवर्षम्**=क्षीणानि वर्षाणि वयसः हायनानि यस्य स तम्, **शान्तनुम् इव**= भीष्मपितरम् इव, **प्रियसत्यव्रतम्**=प्रियं प्रीतिदायकं सत्यस्य सत्याचरणस्य व्रतं नियमः यस्य तम्, शान्तनुपक्षे प्रियः प्रेमास्पद सत्यव्रतः एतन्नामा स्वपुत्रः भीष्म इत्याशयः, यस्य तम्, **अम्बिकाकरतलम् इव**=अम्बिका पार्वती तस्याः करतलम् इव पाणितलम् इव, **रुद्राक्षग्रहणनिपुणम्**=रुद्राक्षस्य रुद्राक्षबीजस्य, ग्रहणे उपादाने निपुणं चतुरम्, अम्बिकाकरतलपक्षे रुद्रस्य अक्षीणि रुद्राक्षाः शिवनेत्रत्रयं तस्य ग्रहणे क्रीडायां विधाने कुशलम्, **शिशिरसमयसूर्यम् इव**=शिशिरसमयस्य शिशिरकालस्य सूर्यम् इव दिनकरम् इव, **कृतोत्तरासङ्गम्**=कृतः उत्तरासङ्गः उत्तरीयवसन स्कन्धभागे येन तम्, सूर्यपक्षे कृतः विहितः उत्तरस्याः दिशः कौबेराशायाः आसङ्गः संसर्गं येन तम्, **वडवानल इव**=वडवा अश्वा तदाकारः अग्निः वडवाग्निः समुद्रानलः तम् इव, **संततपयोभक्षं**=सततं पयः क्षीरं भक्षः भोजनं यस्य तम्, वडवानलपक्षे संततं पयः समुद्रजलं भक्षः यस्य तम्, **शून्यनगरं इव**=विजनं पुरम् इव, **दीनानाथविपन्नशरणम्**=दीनानां दुर्गतानाम् अनाथानां अस्वामिकानां विपन्नानां विपत्तिग्रस्तानां शरणं रक्षकम् शून्यनगरपक्षे दीनानि शोभारहितानि अनाथानि स्वामिशून्यानि विपन्नानि

नष्टानि शरणानि गृहाणि यत्र तत् तादृशम्, **पशुपतिम् इव**=शिवम् इव, **भस्मपाण्डुरोमाश्लिष्टशरीरम्**=भस्मना भूतिलेपनेन पाण्डूनि श्वेतवर्णानि यानि रोमाणि लोमानि तैः आश्लिष्टं संसक्तं शरीरं वपुः यस्य तं तादृशम्, पशुपतिपक्षे भस्मना पाण्डुरं श्वेतम् उमया पार्वत्या आश्लिष्टं सम्पृक्तं च शरीरं यस्य तं तादृशम्, **भगवन्तम् जाबालिम्**=एतदाख्यं मुनिराजम्, **अपश्यम्**=अद्राक्षम् ।

**टिप्पणी—वैनतेय**–विनता+ढक्=वैनतेय । **आधिपत्यम्**=अधिपति+ष्यञ् । 'गरुत्मान् गरुडस्तार्क्ष्यो, वैनतेयः खगेश्वरः' इत्यमरः । **शान्तनु···प्रियसत्यव्रतं**=चन्द्रवंशी राजा प्रतीप के पुत्र शान्तनु अपने पुत्र सत्यव्रत से अत्यन्त प्रेम करते थे । निषाद द्वारा अपनी पुत्री सत्यवती के विवाह के लिए उसके गर्भ से उत्पन्न पुत्र को ही राजगद्दी देने का प्रस्ताव रखने पर इन्होंने सुतस्नेह के कारण ही उसे ठुकरा दिया था और बाद मे भीष्म द्वारा सत्यवती अर्पित किये जाने पर इन्होने पुत्र प्रेम प्रदर्शित करते हुये भीष्म को स्वच्छन्द मृत्यु का वरदान दिया था । जाबालि भी सत्य के व्रत से प्रेम करने वाले हैं । **उत्तरासङ्ग**—उत्तरीय वस्त्र जिसे शरीर के ऊपरी भाग पर धारण किया जाता है । 'उत्तरस्मिन् देहभागे आसज्यते इति उत्तराङ्गः' उत्तर दिशा से ससर्ग, शिशिर ऋतु में मकर की संक्रान्ति आने पर सूर्य उत्तरायण में पहुँच जाते है । **वडवानल**–पौराणिक मान्यता के अनुसार समुद्रस्थित वडवा (घोड़ी) के मुख की अग्नि को वडवाग्नि या वडवानल कहा जाता है । अश्विनी नामक अप्सरा ने वडवा का रूप धारण करके सूर्य के द्वारा गर्भ को धारण किया था । **शरण**–रक्षक, 'शरणं गृहरक्षित्रोः' इत्यमरः । 'वैनतेयमिव' से 'पशुपतिमिव' तक···पूर्णोपमालङ्कार है । **जरच्चन्दन···कुलम्'** यहां लुप्तोपमा तथा पूर्णोपमा का सङ्कर है ।

अवलोक्य चाहमचिन्तयम्—अहो प्रभावस्तपसाम् । इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि, सततमुदासीनापि महाप्रभावतया भयमिवोपज-

नयति प्रथमोपगतस्य । शुष्कनलकाशकुसुमनिपतितानलचटुलवृत्ति नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या दुःसहं भवति, किमुत सकलभुवनतलवन्दितचरणानामनवरतपः क्षपितमलानां करतलामलकवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामे-वंविधानामघक्षयकारिणां । पुण्यानि हि नामग्रहणान्यपि महामुनी-नाम्, किं पुनर्दर्शनानि ।

**हिन्दी-अनुवाद**—(महर्षि जाबालि को) देखकर मैंने सोचा—तपश्चर्या का महात्म्य आश्चर्य का विषय है ! (तभी तो) दहकते सोने की भाँति निर्मल इन (महर्षि जाबालि) की मूर्ति (शरीर) शान्त होती हुई भी, दमकती हुई विजली की भाँति आँखों की ज्योति को चकाचौंध किये दे रही है, निरन्तर उदासीन होती हुई भी महाप्रतापशालिनी होने के कारण नवागन्तुक के लिए भय-सा उत्पन्न कर देती है । स्वल्प तपश्चर्यावाले भी तपोधनियों का सूखे हुए नरकुल एवं कास के फूलों पर गिरे हुये अग्नि की चञ्चलवृत्ति (अर्थात् तत्काल प्रसरणशील होना) के समान चञ्चलवृत्ति वाला—तपस्तेज स्वभावतः निरन्तर असहनशील होता है तब फिर इस प्रकार के महात्माओं का क्या कहना जो कि समस्त भूमण्डल द्वारा समर्चित किये गए चरणों वाले है, जो निरन्तर तपश्चर्या रूप जल से धुले हुये पापों वाले हैं, जो दिव्य दृष्टि से कमल सरीखी हथेली पर रखे हुए आमलक फल (आँवले)की भाँति समस्त संसार को देखने वाले है और जो पापों का विनाश करने वाले हैं । क्योंकि महामुनियों का (तो) नामोच्चारण मात्र भी पुण्यजनक होता है फिर (उनके प्रत्यक्ष) दर्शन का क्या कहना ?

**संस्कृत-व्याख्या**—**अवलोक्य**=प्रेक्ष्य च, **अहम्**=वैशम्पायनः **अचिन्तयम्**=व्यचारयम्, **अहो**=महदाश्चर्यम्, **तपसाम्**=तपश्चर्याणाम्, **प्रभावः**=माहात्म्यम्, **अस्य**=मुनेः, **इयं**=पुरो दृश्यमाना, **शान्ता अपि**=शान्तिसम्पन्ना अपि, **मूर्तिः**=स्वरूपम्, **उत्तप्तकनकावदाता**=उत् प्राबल्येन तप्तम् उष्णीकृतं यत् कनकं काञ्चनं तद्वत् अवदाता निर्मला सती, **परिस्फुरन्ती**=संचरन्ता, **सौदामिनी इव**=तडित् इव, **चक्षुषः**=दृष्टेः, **तेजांसि**=ज्योतींषि, **प्रतिहन्ति**=प्रतिरुणद्धि, **सततं**=अजस्रम्, **उदासीना अपि**=निरपेक्षा अपि, **महाप्रभावतया**

= महनीयप्रभावशालितया, = **प्रथमोपगतस्य** = प्रथमम् उपगत: तस्य प्रथमवारं आगतस्य, **भयं इव** = साध्वसम् इव, **उपजनयति** = उत्पादयति, **यदा तनु-तपसाम्** = तनु स्वल्पं तप: तपश्चरणं येषां तेषां तपस्विनाम् तापसानाम् अपि, **तेजः** = प्रताप:, **शुष्कनलकाशकुसुमनिपतितानलचटुलवृत्ति** = शुष्केषु विरसेषु नलेषु नडाख्यतृणेषु काशकुसुमेषु काशपुष्पेषु च निपतित: य: अनल: वह्नि: तद्वत् चटुला चपला वृत्ति: व्यापारो यस्य तादृशम्, **प्रकृत्या** = स्वभावेन, **नित्यं** = सततम्, **असहिष्णु** = असहनशीलम्, **किमुत** = किं पुन:, **सकलभुवन-तलवन्दितचरणानाम्** = सकलेन समस्तेन भुवनतलेन जगता वन्दितौ पूजितौ चरणौ पादौ येषां तेषाम्, **अनवरततपःक्षपितमलानां** = अनवरतं सततं यत् तप: तपस्या तेन क्षपितं नाशितं मलं दुष्कृतं यै: तेषाम्, **दिव्येन** = अलौकिकेन, **चक्षुषा** = दृष्ट्या, **अखिलम्** = समस्तम्, **जगत्** = भुवनतलम्, **करतलामलवत्** = करतले पाणितले य: अमलक: धात्रीफलं तद्वत्, **आलोकयतां** = पश्यताम्, **एवंविधानां** = ईदृशानाम्, **अघक्षयकारिणां** = अघानां पापानां क्षयं विनाशं कुर्वन्तीति तच्छीला:, तेषां तादृशाम्, **भगवताम्** = ऐश्वर्यादिमताम्, **हि** = निश्चयेन, **महामुनीनां** = महर्षीणाम्, **नामग्रहणानि अपि** = अभिधानोच्चारणानि अपि, **पुण्यानि** = सुकृतजनकानि, **किं पुनः** = किं वक्तव्यम्, **दर्शनानि** = तेषां साक्षात्कारा:।

**टिप्पणी—अवलोक्य**—अव + लोक् + क्त्वा—ल्यप् । **अचिन्तयम्**—चिन्त् धातु लङ् उ० पु० ए० व० । **सौदामिनी**—बिजली, सुदामा मेघ से उत्पन्न होने वाली । 'सुदामा तु पुमान् वारिधरपर्वतभेदयो:' । "तडित्सौदामिनी विद्युच्चञ्चला चपला अपि" इत्यमर: । **दिव्येन**—अलौकिक; दिव + यत् = दिव्य तृ०ए० व० । 'उत्तप्तकनकावदाता' में लुप्तोपमा तथा 'उपजनयतीव' में क्रियोत्प्रेक्षा है ।

धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना । पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरमिव नलिनासनमपगतान्यव्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः श्रृण्वन्तः समुपासते । सरस्वत्यपि धन्या यास्य तु सततमतिप्रसन्ने करुणाजलनिस्यन्दिन्यगाधगाम्भीर्ये रुचिरद्विजपरिवारा मुखकमलसम्पर्कसुखमनुभवन्ती निवसति राज-

हंसीव मानसे चतुर्मुखकमलवासिभिश्चतुर्वेदैः सुचिरादिव द्वितीय-मिदमासादितं । स्थानम् एनमासाद्य शरत्कालमिव कलिकालजलधर-समयकलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः ।

**हिन्दी-अनुवाद**—धन्य है यह आश्रमस्थान जिसमें ये (महर्षि जाबालि) अधिपति हैं । अथवा पृथ्वीतल के कमलयोनि-ब्रह्मा इन (महर्षि जाबालि) से सम्पूर्ण भूमण्डल ही धन्य है । निश्चय ही पुण्यभागी है ये मुनिगण जो कि इतरेतर कार्यों को छोड़कर, इन (महर्षि जाबालि) के मुखावलोकन के कारण अपलक चितवन वाले होकर पवित्र कथाएँ सुनते हुए द्वितीय ब्रह्मा प्रतीत होने वाले इन (जाबालि) की सेवा करते हैं । सरस्वती भी धन्य है जो कि मनोहर (शिष्यभूत) द्विजों-ब्राह्मणों से परिवृत होकर तथा (महर्षि जाबालि के) मुखरूपी कमल के साहचर्य—सुख का अनुभव करती हुई—निरन्तर अतिशय प्रसादगुणसम्पन्न, करुणारूपी जल का निस्यन्दन (टपकाव) करने वाले तथा अथाह गम्भीरता वाले मानस (मन) में उसी प्रकार निवास करती हैं जैसे मनोहर 'द्विज' अर्थात् पक्षियों के परिवार वाली तथा (भक्षणार्थ) मुख में रखे गये कमल के सम्पर्क सुख का अनुभव करती हुई राजहंसिनी—अत्यन्त निर्मल, करुणासदृश जल को प्रवाहित करने वाले तथा अतलस्पर्शी गहराई वाले मानसरोवर में निवास करती है ।

चतुर्मुख ब्रह्मा के मुख कमलों में निवास करने वाले चारों वेदों ने मानों बहुत दिन बाद (रहने योग्य महर्षि जाबालि के मुखरूपी) इस द्वितीय स्थान को प्राप्त कर लिया है । संसार कलिकाल सदृश वर्षा ऋतु के कारण मलिनता को प्राप्त तथा शरत्काल को प्राप्त कर पुनः (जल की) निर्मलता से युक्त नदियों की भांति पावसऋतु सरीखे कलियुग के सम्पर्क से कलुषित समस्त (१४ हों) विद्याएँ इन (महर्षि जाबालि) को प्राप्त कर निर्दोष बन गई ।

**संस्कृत-व्याख्या**—**इदम्** = प्रत्यक्षम्, **आश्रमपदम्** = ऋषिजनस्थानम्, **धन्यम्** = कृतकृत्यम्, **यत्र** = यस्मिन् आश्रमे, **अयम्** = एष जाबालिः, **अधिपतिः** = अध्यक्षः, **अथवा** = यद्वा, **अवनितलकमलयोनिना** = अवनितलस्य भूतलस्य कमलयोनिः ब्रह्मा तेन तत्सदृशेन इत्यर्थ, **अनेन** = महामुनिना, **अधिष्ठितम्** = आश्रितम्, **अखिलम्** = समस्तम्, **भुवनतलम् एव** = धरातलम् एव, **धन्यम्** =

कृतकृत्यम्, **खलु** = निश्चयेन, **अमी** = आश्रमनिवासिनः, **मुनयः** = ऋषयः, **पुण्यभाजः** = पुण्यं भजन्ते इति पुण्यभाजः सुकृतवन्तः, **यत्** = यस्मात् कारणात्, **अपगतान्यव्यापाराः** = अपगताः दूरीभूताः अन्ये एतत्सेवातिरिक्ताः व्यापाराः कर्माणि येषां ते तादृशः, **मुखावलोकन-निश्चलदृष्टयः** = मुखस्य लपनस्य अवलोकने दर्शने निश्चला निर्निमेषा दृष्टिः नेत्रवृत्तिः येषां ते तादृशः मुनयः, **पुण्याः** = सुकृतभाजः, **कथाः** = कथानकानि, **शृण्वन्तः** = आकर्णयन्तः, **अपरम्** = द्वितीयम् **नालिनासनम् इव** = कमलासनम् ब्रह्माणम् इव, **अहर्निशम्** = रात्रिन्दिवम्, **समुपासते** = सेवन्ते, **तु** = पुनरर्थे, **सरस्वती अपि** = भारती अपि, **धन्या** = श्लाघनीया, **या अस्य** = महर्षेः, **अतिप्रसन्ने** = अत्यन्तप्रसादगुणयुक्ते, पक्षे अतिस्वच्छे, **करुणाजलनिस्यन्दिनि** = करुणा परदुःखनाशेच्छा सा एव जलं सलिलं तत् निस्यन्दय-तीति स्रावयतीति तच्छीलं तस्मिन्, पक्षे करुणा इव जलं करुणाजलं तस्य निस्यन्दिनि, **अगाधगाम्भीर्ये** = अगाधम् इयत्ताशून्यं गाम्भीर्यं दुःखगाहस्वभावत्वं यस्य तादृशे, पक्षे अगाधम् अतलस्पर्शं गम्भीर्यं गम्भीरता यस्य तादृशे, **मानसे** = चित्ते,पक्षे मानसरोवरे, **राजहंसी इव** = लोहितचञ्चुचरणा सितवर्णा मराली इव, **रुचिरद्विजपरिवारा** = रुचिराः तेजस्विनः द्विजाः शिष्यभूताः ब्राह्मणाः एव परिवारः परिजनः यस्या पक्षे रुचिराः सुन्दराः द्विजाः पक्षिणः एव परिवारः यस्या सा तादृशी, **मुखकमलसम्पर्कसुखम्** = मुखं वदनं कमलं नलिनं इव मुखकमलं तस्य सम्पर्कः संस्पर्शः तस्य सुखम्, पक्षे मुखे यत् कमलं तस्य संपर्कसुखम्, **अनुभवन्ती** = आस्वादमाना, **सततम्** = सर्वदा, **निवसति** = वासं कुरुते **चतुर्मुखकमलवासिभिः** = चत्वारि चतुः संख्यकानि मुखानि वदनानि, यस्य सः चतुर्मुखः प्रजापतिः तस्य मुखकमलेषु वसन्ति वासं कुर्वन्तीति तच्छीलाः तैः, **चतुर्वेदैः** = चत्वारश्च ते वेदाः चतुर्वेदाः तैः = ऋग्यजुः सामाथर्वसंज्ञकैः, **सुचिरात्** = चिरकालात्, **इव** = उत्प्रेक्षाव्यञ्जकमिदम्, **इदम्** = एतत् मुनिमुखरूपम् **द्वितीयम्** = अपरम्, **स्थानम्** = निवासस्थलम्, **आसादितम्** = प्राप्तम्, **एनम्** = महामुनिजाबालिम्, **आसाद्य** = लब्ध्वा, **कलिकालजलधरसमयकलुषिताः** = कलिकालः कलियुगःजलधरसमयः इव वर्षासमयः इव तेन कलुपिताः दूषिताः,सरित्पक्षे कलिकालः इव जलधरसमयः तेन कलुषिताः मलिनीकृताः, **सर्वविद्याः** = चतुर्दशविद्याः, **शरत्कालम्** = शरदृतुम, **आसाद्य** = लब्ध्वा, **सरितः इव** = नद्यः इव,

**जगति**=लोके, **पुनरपि**=भूयोऽपि, **प्रसादम्**=विशदताम्, पक्षे नैर्मल्यम्, **उपगताः**=प्राप्ताः ।

**टिप्पणी–नलिनासन**–कमल है आसन जिसका ऐसे ब्रम्हा जी । **सरस्वती**–वाणी, वाणी की अधिष्ठात्री देवी । मुनि के मानस में मुख कमल के सम्पर्क सुख का अनुभव करते हुए सरस्वती का निवास बतलाने से यहां सरस्वती का वाणी रूप ही इष्ट है । इस अर्थ के अनुरूप 'रुचिरद्विजपरिवारा' पद का यह अर्थ भी हो सकता है कि चमकीली दन्तपङ्क्ति उस वाणी का परिवार है । **द्विज**=ब्राह्मण, दन्त, पक्षी । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । **सर्वविद्याः**=चौदह विद्याएँ, समस्त विद्यायें (अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तारः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।) कोई लोग चौदह विद्याओं में चार बढ़ाकर अष्टादश विद्यायें बतलाते है–"आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ।।" '**अवनितलकमलयोनिना**' में निरङ्ग केवल रूपक है । '**नलिनासनमिव**' में द्रव्योत्प्रेक्षा, 'हंसीव' मे **पूर्णोपमालङ्कार** तथा '**सुचिरादिव**' में गुणोत्प्रेक्षा है ।

नियतमिह सर्वात्मना कृतावस्थितिना भगवता परिभूतकलिकालविलसितेन धर्मेण न स्मर्यते कृतयुगस्य । धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमण्डलनिवासाभिमानमम्बरतलम् । अहो ! महासत्त्वेयं जरा यास्य प्रलयरविरश्मिनिकरदुर्निरीक्ष्ये रजनिकरकिरणपाण्डुशिरोरुहे जटाभारे फेनपुञ्जधवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्निपतन्ती न भीता । बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभावाद् भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम् । एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्णन्त्येतत्प्रीत्याशुशुक्षणयः । तरलितदुकूलवल्कलोऽयं चाश्रमलताकुसुमसुरभिपरिमलो मन्दमन्दसंचारी सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः ।

**हिन्दी-अनुवाद**—निश्चित ही इस आश्रम में सर्वतोभावेन आश्रम बनाये हुए तथा कलिकाल की समस्त (हीन) चेष्टाओं को न्यग्भूत (तिरस्कृत) कर देने वाले भगवान् धर्मदेव सत्ययुग का स्मरण नहीं करते हैं। भूतल को इन (महर्षि जाबालि) से अलंकृत देखकर निश्चय ही अब गगनमण्डल(अपने क्षेत्र में) सप्तर्षि मण्डल के निवास करने के कारण उत्पन्न अभिमान (सुभगम्मन्यता) का वहन नहीं करता है। आश्चर्य ! (इनकी) यह वृद्धावस्था बड़े जीवट की है जो कि युगान्तकालीन सूर्य के किरणसमूह की भाँति देखा न जा सकने योग्य तथा चन्द्रकिरणों के समान धवलवर्ण जटापुञ्ज पर गिरती हुई (उसी प्रकार) संत्रस्त नहीं हुई जैसे फेनराशि के कारण शुभ्रवर्णा गङ्गा भगवान् शङ्कर के जटाकलाप पर तथा दुग्धाहुति अग्निदेवता के शिखाकलाप पर गिरती हुई भयभीत नहीं होती। प्रचुर घृत (की आहुतियों) के धूमसमूह से आश्रम को श्यामवर्ण बना देने वाले भगवान् (जाबालि) के माहात्म्य से मानो संत्रस्त हुए सूर्य किरणों का समूह भी दूर से ही तपोवन को छोड़ देता है। पवन के कारण चञ्चल अतएव ज्वालपुञ्ज को समेटे हुई ये (आहवनीय, दाक्षिणात्य तथा गार्हपत्य) यज्ञाग्नियाँ इन (महर्षि जाबालि) के प्रति प्रीति होने के कारण मानो हाथ जोड़कर मन्त्रशोधित हव्यों को ग्रहण कर रही हैं। दुकूलवल्कलों को झकझोर देने वाला, आश्रमलताओं के पुष्पों के सौरभ से सुवासित तथा धीरे-धीरे सञ्चरण करता हुआ यह पवन मानों सशङ्क होकर महर्षि जाबालि के समीप प्रस्तुत हो रहा है।

**संस्कृत-व्याख्या**—**नियतम्** = सुनिश्चितम्, **इह** = अस्मिन आश्रमे, **सर्वात्मना** = सर्वविधिना, **कृतावस्थितिना** = कृता विहिता अवस्थितिः निवासः येन तेन, **परिभूतकलिकालविलसितेन** = परिभूतानि तिरस्कृतानि कलिकालस्य कलियुगस्य विलसितानि चेष्टितानि येन तेन, **भगवता** = माहात्म्यवता, **धर्मेण** = धर्मराजेण, **कृत-युगस्य** = सत्ययुगस्य, **न स्मर्यते** = न चिन्त्यते, **नूनम्** = नियतम्, **अम्बर-तलम्** = आकाशतलम्, **अनेन** = जाबालिना, **अधिष्ठितम्** = आश्रितम्, **धरणि-तलम्** = भूतलम्, **आलोक्य** = विलोक्य, **इदानीम्** = अधुना, **सप्तर्षिमण्डलनिवा-साभि-मानम्** = सप्त च ते ऋषयः सप्तर्षयः तेषां यत् मण्डलं मरीच्यादिसमूहः

तस्य यो निवास: अधिष्ठानं तेन यो अभिमान: दर्प: तम्, **न वहति**=न धारयति । **अहो**=आश्चर्यम्, **इयम्**=पुरोदृश्यमाना, **जरा**=वृद्धावस्था, **महासत्त्वा** =महत् सत्त्वं यस्या: सा: अत्यन्तसाहसवती, **या अस्य**=मुने:, **प्रलयरविरश्मिनिकरदुर्निरीक्ष्ये**=प्रलयस्य कल्पान्तस्य ये रविरश्मय: दिनकरकिरणा: तेषां यो निकर: समूह: तद्वत् दुर्निरीक्ष्ये दु:खेन विलोकयितुं शक्ये दुर्दर्शे इत्यर्थ:, **रजनिकरकिरणपाण्डुशिरोरुहे**=रजनीं करोति इति रजनिकर: चन्द्रमा:, रजनिकरस्य ये किरणा: मयूखा: तद्वत् पाण्डव: श्वेता: शिरोरुह: कचा: यस्मिन् तस्मिन्, **जटाभारे**=सटासमूहे, **पशुपते:**=शिवस्य जटाभारे, **फेनपुञ्जधवला**=फेनपुञ्जेन डिण्डीरसमूहेन धवला उज्ज्वला, **गंगा इव**=भागीरथी इव, **विभावसो:**=अग्ने:, **शिखाकलापे**=ज्वालासमूहे, **क्षीराहुति: इव**=क्षीरस्य दुग्धस्य आहुति: प्रक्षेप: इव, **निपतन्ती**=पदं निदधाना, **न भीता**=न त्रस्ता, **रविकिरणजालम्** रवे: सूर्यस्य किरणानां रश्मीनां जालं समूह: अपि, **बहलाज्यधूमपटलमलिनीकृताश्रमस्य**=बहलानां निविडानाम् आज्यधूमानां हविर्धूमानां पटलेन मण्डलेन मलिनीकृत: अमलिन: मलिन: कृत इति श्यामीकृत: आश्रम: तपोभूमि: येन तस्य, **भगवत:**=महात्मन: जावाले:, **प्रभावात्**=प्रतापात्, **भीतम् इव**=त्रस्तम् इव, **तपोवनम्**=धर्मारण्यम् **दूरत: इव**=दूराद् एव, **परिहरति**=परित्यजति, **अत्र**=आश्रमे, **एते**=वेदीषु दृश्यमाना:, **पवनलोलपुञ्जीकृतशिखाकलापा:**=पवनेन समीरेण लोल: चञ्चला: पुञ्जीकृत: राशीकृतश्च शिखाकलाप: ज्वालासमूह: येषां ते, अतएव च **रचिताञ्जलय: इव**=रचिता: बद्धा: अञ्जलय: निकुब्जपाणियोगा: यै: ते इव, **आशुशुक्षणय:**=वह्नय:, **एतत्प्रीत्या**=एतस्य मुने: प्रीत्या प्रेम्णा, **मन्त्रपूतानि**=मन्त्रै:ऋग्भि: पूतानि पवित्राणि, **हवींषि**=हव्यानि, **गृह्णन्ति**=स्वीकुर्वन्ति **तरलितदुकूलवल्कल:**=तरलितानि प्रकम्पितानि दुकूलवत् क्षौमवसनवत् वल्कलानि वृक्षत्वग्वस्त्राणि येन स:, **आश्रमलताकुसुमसुरभिपरिमल:**=आश्रमे या: लता: तपोभूमिवल्लर्य: तासां यानि कुसुमानि प्रसूनानि तेषां सुरभि: घ्राणतर्पण: परिमल: गन्ध: यस्मिन् स:, **मन्दमन्दसंचारी**=मन्दमन्दं शनै: शनै: संचरति प्रवहति इति तच्छील: स: तादृश:, **गन्धवाह:**=गन्ध वहतीति स: वायु:, **सशङ्क इव**=शङ्कया सह

विद्यमान इव, भीत इव, **अस्य**=मुनेः, **समीपम्**=अन्तिकम्, **उपसर्पति**=उपगच्छति ।

**टिप्पणी–अवस्थितिना**–अव+स्था+क्तिन्; तृ० ए० व० । **कृतयुग**—सत्ययुग । **विभावसु**–अग्नि, विभा अर्थात् तेज ही है वसु धन जिसका । **बहल**—अत्यन्त घना, घुटा हुआ । **आज्य–घृत**, हवि 'घृतमाज्यं हविः सर्पिः', इत्यमरः **आशुशुक्षणयः**—अग्नियाँ, आहवनीय, गार्हपत्य, दक्षिण अग्नि । आ समन्तात् शोषितुम् इच्छति—आ+शुष्+सन्+अनि, अभ्यास को द्वित्व 'शिखावाना–शुशुक्षणिः' इत्यमरः । 'फेनपुञ्ज में लुप्तोपमा' 'गङ्गेव' तथा 'आहुतिरिव' में उपमा, 'भीतमिव', 'रचिताञ्जलयः इव' में क्रियोत्प्रेक्षालङ्कार है । सशङ्क इव में गुणोत्प्रेक्षा है ।

प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि । सर्वतेजस्विनामयं चाग्रणीः । द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना । निष्कम्पेव क्षितिरेतदवष्टम्भात् । एष प्रवाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः सन्तोषामृतरसस्य, उपदेष्टा सिद्धिमार्गस्य, अस्तगिरिरसद्ग्रहस्य,मूलमुपशमतरोः, नाभिः प्रज्ञाचक्रस्य, स्थितिवंशो धर्मध्वजस्य, तीर्थं सर्वविद्यावताराणाम्, बडवानलो लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम् दावानलो रागपल्लवस्य, महामन्त्रः क्रोधभुजङ्गस्य, दिवसकरो मोहान्धकारस्य, अर्गलाबन्धो नरकद्वाराणाम्, कुलभवन्माचाराणाम्, आयतनं मङ्गलानाम् अभूमिर्मदविकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य, प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः, अननुकूलोऽभिमानस्य, असंमतो दैन्यस्य, अनायत्तो रोषस्य, अनभिमुखः सुखानाम् ।

**हिन्दी-अनुवाद**—प्रायः (पृथ्वी आदि) महाभूतों अथवा महाप्राणियों के भी तेज अतिक्रमण करने योग्य नहीं होते है और ये (महर्षि जाबालि तो) समस्त तेजस्वियों में अग्रणी (प्रधान, अगुवा) हैं। इन महापुरुष से समलङ्कृत यह भूतल दो सूर्यों से संवलित प्रतीत होता है, इनके अवलम्बन से पृथ्वी मानो सुस्थिर है। ये कारुण्यरस के प्रवाह हैं, संसार रूपी सागर का सन्तरण करने के लिये सेतुबन्ध (पुल) सदृश हैं, क्षमारूपी जलराशि के आधार है, तृष्णारूपी लतावन के (विनाशार्थ) कुठार हैं, सन्तोष रूपी अमृत द्रव के सागर हैं, मोक्ष-पथ के उपदेशक हैं, अनिष्टकारी ग्रह के अस्ताचल (विलयबिन्दु) हैं, शान्तितरु के मूल हैं, प्रतिभाचक्र के केन्द्र बिन्दु हैं, सुकृतपताका के धारक वंशदण्ड है, समस्त विद्याओं में उतरने (प्रवेश करने) के लिए 'तीर्थ' अर्थात् घाट हैं, लोभ-रूपी समुद्र की (शोषक) वाडवाग्नि हैं, शास्त्ररूपी रत्नों के (परीक्षणार्थ) निकषभूत पाषाणखण्ड हैं, वासनारूपी नई कोपल के दावानल है, क्रोधरूपी भुजङ्ग के (वशीभूत कर लेने वाले) महामन्त्र हैं, अज्ञानरूपी अन्धकार के (अपसारक) सूर्य हैं, नरकद्वारों के (अवरोधक) अर्गलबन्ध (सिटकनी या कुण्डी) है, शुभाचरणों के मूलगृह हैं, कल्याण के मन्दिर हैं, अहंकारजनित, वृत्तियों के ऊपर क्षेत्र हैं, शोभनमार्गों के उपदेष्टा हैं, सज्जनता के उद्गम बिन्दु हैं, उत्साहरूपी चक्र (पहिये) की नेमि (तीली या परिधि) हैं, सत्त्व (धैर्य) के आधार हैं, कलियुग के शत्रु है, तपश्चर्या के भण्डारागार हैं, सत्य के मित्र हैं, मृदुता अथवा सरलता के क्षेत्र (सस्योत्पत्तिस्थल) हैं, धर्मसमूह क उत्पत्तिस्थल हैं, ईर्ष्याभाव को अवकाश (बढ़ावा) न देने वाले हैं, विपत्ति के शत्रु हैं, पराभव के अपात्र हैं, अहङ्कार के अहितकर हैं, दीनता से असहमत हैं, क्रोध के वशीभूत नहीं हैं, तथा सुखों की ओर अभिमुख नहीं है।

**संस्कृत-व्याख्या**—**प्रायः** = बाहुल्येन, **महाभूतानाम् अपि** = महाजन्तूनामपि, **तेजांसि** = महांसि, **दुरभिभवानि** = दुःखेन कठिनतया अभिभवितुं न्यक्कर्तुं योग्यानि दुर्धर्षाणि इत्यर्थः, **भवन्ति** = वर्तन्ते, **च** = पुनरर्थे, **अयम्** = एषः महात्मा जाबालिः, **सर्वतेजस्विनाम्** = अखिलधामवताम्, **अग्रणीः** = नेता, **अनेन** = एतेन, **महात्मना** = तपस्विना, **अधिष्ठितम्** = आश्रितम्, **जगत्** = भुवनम्, **द्विसूर्यम्**

**इव** = द्वौ उभौ सूर्यो दिनकरौ यत्र तादृशम् इव, **आभाति** = प्रतीयते, **एतदवष्टम्भाद् इव** = एतस्य मुने: अवष्टम्भ: आश्रय: तस्मादिव, **क्षितिः** = धरा, **निष्कम्पा** = निर्गता कम्पात् निष्कम्पा-निश्चला, **एषः** = अयं मुनि:, **करुणरसस्य** = दयासलिलस्य, **प्रवाहः** = स्रोत:, **संसारसिन्धोः** = संसार जगत् एव सिन्धु समुद्र: तस्य, **सन्तरणसेतुः** = संतरणाय पारगमनायसेतु: उत्तरणम्, **क्षमाम्भसाम्** = क्षमा सहनशीलता एव अम्भांसि सलिलानि तेषाम्, **आधारः** = आशय:, **तृष्णालतागहनस्य** = तृष्णा विषयलिप्सा लता: वल्लय: तासां गहनस्य विपिनस्य, **कर्तनाय परशुः** = कुठार:, **सन्तोषामृतरसस्य** = संतोष: तृप्ति: स एव, **अमृतरसः** = पीयूषरस: तस्य, **सागरः** = समुद्र:, **सिद्धिमार्गस्य** = सिद्धि: अणिमादिसिद्धि तस्या: मार्ग: पन्था तस्य, **उपदेष्टा** = उपदेशक:, **असद्ग्रहस्य** = स सत् असत् दुष्टता तदेव ग्रह: शनैश्चरप्रभृति: तस्य अथवा असद्ग्रह: दुराग्रह: स एव असद्ग्रह: अशुभग्रह: शनिसदृश: तस्य, **अस्तगिरिः** = अस्ताचल:, **उपशमतरोः** = उपशम: शान्ति: स एव तरु: पादप: तस्य , **मूलम्** = हेतु:, **प्रज्ञाचक्रस्य** = प्रज्ञा प्रज्ञनम् एव चक्रं रथाङ्गम्, **नाभिः** = मध्यपिण्डिका, **धर्मध्वजस्य** = धर्म: सुकृतं स एव ध्वज: पताका तस्य, **स्थितिवंशः** = स्थितये अवस्थानाय वंश: वेणुदण्ड: इत्यर्थ:, **सर्वविद्यावताराणाम्** = सर्वा: सकला: या विद्या: ज्ञानशास्त्राणि तासु ये अवतारा: प्रवेशा: तेषाम्, **तीर्थम्** = घट्ट:, **लोभार्णवस्य** = लोभ: लोलुपता एव अर्णव: सागर: तस्य, **वडवानलः** = समुद्राग्नि:, **शास्त्ररत्नानाम्** = शास्त्राणि वेदादिग्रन्था: तानि एव रत्नानि मणय: तेषाम्, **निकषोपलः** = उत्कर्षपरीक्षकप्रस्तर:, **रागपल्लवस्य** = राग: विषयाभिलाष: स एव पल्लवं किसलयं तस्य, **दावानलः** = दवस्य वनस्य अयं दाव: वनसम्बन्धी स च अनल:वह्नि:, **क्रोधभुजंगमस्य** = क्रोध: कोप: स एव भुजङ्गम: सर्प: तस्य, **महामन्त्रः** = महाँश्चासौ मन्त्र:–वशीकरणमन्त्र:, **मोहान्धकारस्य** = मोह: अविवेक: स एव अन्धकार: तिमिर: तस्य, **दिवसकरः** = रवि:, **नरकद्वाराणाम्** = निरयकपाटानाम्, **अर्गलाबन्धः** = कपाटप्रतिबन्धक:, ,**आचाराणाम्** = सदाचाराणाम्, **कुलभवनम्** = मूलगृहम् **मङ्गलानाम्** = कल्याणानाम्, **आयनम्** = आवासस्थलम्, **मदविकाराणाम्** = मद:–अहंकार: तस्य ये विकारा: व्यापारा: तेषां दर्पवृत्तीनाम्,

**अभूमिः**=अप्रशस्ता भूमिः अभूमिः अविषयः, **सत्पथानाम्**=सन्तः शोभनाः पन्थानः मार्गाः सत्पथाः तेषाम्, **दर्शकः**=निर्देशकः, **साधुतायाः**=साध्नोति परकार्यमिति साधुः तस्य भावः तत्ता तस्याः सज्जनतायाः, **उत्पत्तिः**=प्रसवस्थली, **उत्साहचक्रस्य**=उत्साहः उद्योगः स एव चक्रं रथाङ्गं तस्य, **नेमिः**=प्रान्तभागः, **सत्त्वस्य**=आत्मबलस्य, **आश्रयः**=आधारः, **कलिकालस्य**=कलियुगस्य, **प्रतिपक्षः**=विरोधी, **तपसः**=तपश्चर्यायाः, **कोशः**=निधिः, **सत्यस्य**=तथ्यस्य, **सखा**=सुहृत्, **आर्जवस्य**=सरलतायाः, **क्षेत्रम्**=आवासभूमिः **पुण्यसंचयस्य**=पुण्यानि सुकृतानि तेषां सञ्चयः पुञ्जः तस्य, **प्रभवः**=उत्पत्तिस्थानम् **मत्सरस्य**=ईर्ष्यायाः, **अदत्तावकाशः**=न दत्तः अवकाशः येन सः, **विपत्तेः**=आपदः, **अरातिः**=अरि, **परिभूते**=अनादरस्य, **अस्थानम्**=अपदम् **अभिमानस्य**=अहंकारस्य, **अननुकूलः**=न अनुकूलः प्रतिकूलः, **दैन्यस्य**=दीनतायाः, **असंमतः**=न सम्मतः, **रोषस्य**=क्रोधस्य, **अनायत्तः**=न आयत्तः अनायत्तः अनधीनः, **सुखानाम्**=ऐहलौकिकतृष्णानाम्, **अनभिमुखः**=अनभीप्सुकः ।

**टिप्पणी–तेजस्विनाम्**–तेजस् + विन् = तेजस्विन् ; ष० ब० व० । **अवष्टम्भ**–सहारा, आधार । **गहन**–वन 'गहनं काननं वनम्' इत्यमरः । **अवतार**–उतरना, प्रवेश करना । **अभूमिः**–अप्रशस्त भूमि, ऊसर, जहाँ कोई बीज नहीं जमता मुनि के अन्दर भी विकार नहीं उत्पन्न होते । **आर्जव**–ऋजुता, सरलता । **अराति**–शत्रु । न राति ददाति सुखं यः स अरातिः न–रा+क्तिन् । **अनायत्त**–अपराधीन, क्रोध जिन्हें वश में नहीं कर सका था । 'अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ' इत्यमरः । यहाँ **करुणारसस्य**–से लेकर **मोहान्धकारस्य**' तक सर्वत्र परम्परित रूपकालंकार है । **नेमिरुत्साह–चक्रस्य** में परम्परित रूपक है ।

अस्य भगवतः प्रभावादेवोपशान्तवैरमपगतमत्सरं तपोवनम् । अहो ! प्रभावो महात्मनाम् अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति । तथाहि एष विकचोत्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचन-

द्युतिशबलमभिनवशाद्वलमिव विशति शिखिनः कलापमातपाहतो निः-
शङ्कमहिः। अयमुत्सृज्य मातरमजातकेसरैः केसरिशिशुभिः सहोपजात-
परिचयः शरत्क्षीरधारं पिबति कुरङ्गशावकः सिंहीस्तनम् एष मृणा-
लकलापाशङ्किभिः शशिकरधवलं सटाभारमामीलितलोचनो बहु
मन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः।

**हिन्दी अनुवाद**—इन भगवान् (जाबालि) के प्रभाव से ही तपोवन प्रशान्त वैरभाववाला तथा विलीन ईर्ष्याभाव वाला (हो गया) है। महात्माओं का प्रभाव भी क्या है, (अर्थात् आश्चर्य का विषय है) क्योंकि इस तपोवन में पशु-पक्षी भी सनातन (जन्मजात) वैरभाव को छोड़ कर, प्रशान्त अन्तरात्मा वाले बन कर, तपोवन में रहने के सुख का अनुभव करते हैं। उदाहरणार्थ-विकसित नीलकमल की दलसृष्टि का अनुकरण करने वाले, ऊपर उठे हुए सैकड़ों मनोहर चन्द्रकों (चन्द्राकार चिह्नों) वाले अतएव हरिणों की नेत्रकान्ति के समान चितकबरे तथा कोमल घासों का कछार प्रतीत होने वाले मयूर के पिच्छभार में (प्रचण्ड) सूर्यताप से पीड़ित हुआ यह सर्प निर्विशङ्क भाव से प्रवेश कर रहा है। अनुत्पन्न स्कन्धकेसरों वाले सिंहशावकों के साथ परिचित हुआ यह हरिण का छौना (अपनी) माँ को छोड़कर, स्रवित होती हुई दुग्धधारा वाले सिंहनी के स्तन को पी रहा है। मृणालपुञ्ज के भ्रमवश गजशावकों द्वारा खींचे जाते हुए चन्द्रिकाधवल केसरसमूह को झँपकी हुई आँखों वाला यह वनकेसरी बहुत (सुखद) मान रहा है।

**संस्कृत-व्याख्या**—**अस्य भगवतः**=ऐश्वर्यशालिनः जाबालेः, **प्रभावात् एव**= माहात्म्यात् एव, **तपोवनम्**=आश्रमपदम्, **उपशान्तवैरम्**=उपशान्तानि निष्टानि वैराणि विरोधाः यत्र तत् तादृशम्, **अपगतमत्सरम्**=अपगतः दूरीभूतः मत्सरः अन्यशुभद्वेषः तस्मात् तत् तादृशं वर्तते इति शेषः, **अहो**=अत्याश्चर्यं, **महात्मनाम्**=महर्षीणाम्, **प्रभावः**=तेजः, **हि**=निश्चयेन, **अत्र**=आश्रमे, **शाश्वतिकम्**=शश्वत् सदा भवं शाश्वतिकं सनातनम्, **विरोधम्**=विद्वेषः, **अपहाय**=परित्यज्य, **उपशान्तात्मानः**=उपशान्ताः विरोधशून्याः आत्मनः अन्तः

करणानि येषां ते तादृशः, तिर्यञ्चोऽपि=पशुपक्ष्यादिजीवा अपि, तपोवनवसति-सुखम्=तपोवने आश्रमपदे या वसतिः निवासः तस्याः सुखम् आनन्दम्, अनु-भवन्ति=प्राप्नुवन्ति, तथा हि=पूर्वोक्तमेव समर्थ्यते, एषः=पुरो दृश्यमानः, अहिः=भुजंगः, आतपाहतः=आतपेन धर्मेण आहतः पीडितः सन्, विकचोत्पल-वनरचनानुकारिणाम्=विकचानां विकसितानाम् उत्पलानां नीलकमलानां यद् वनं काननं तस्य रचना सृष्टिः ताम् अनुकरोति सादृश्यं भजते इति तच्छीलः तम् । उत्पतच्चारुचन्द्रकशतम्=उत्पतत् उद्दीप्यमानं चारुचन्द्रकाणां सुन्दरमेचकानां शतं समूहः यत्र तं तादृशम्, अतएव हरिणलोचनद्युतिशबलम्=हरिणानां मृगाणां लोचनद्युतिभिः नयनप्रभाभिः शबलं कर्बुरितम्, अभिनवशाद्वलम् इव=नवोत्पन्नतृणसंकुलप्रदेशम् इव, शिखिनः=मयूरस्य, कलापम्=पिच्छम्, निःश-ङ्कम्=निर्भयम्, विशति=आश्रयते, सर्पमयूरयोः, अयम्=दृश्यमानः, कुरङ्ग-शावकः=मृगपोतः, मातरम्=जननीं मृगीम्, उत्सृज्य=त्यक्त्वा, अजातकेसरैः=न जाताः उत्पन्नाः केसराः जटाः येषां तैः, केसरिशिशुभिः=सिंहशावकैः, सह=सार्द्धम्, उपजातपरिचयः=उपजातः उत्पन्नः परिचयः संस्तवः यस्य स परिचितः सन्, क्षरत्क्षीरधारम्=क्षरन्ति स्रवन्ति क्षीरधाराः दुग्धप्रवाहः यस्मात् तम्, सिंहीस्तनम्=सिंह्याः केसरिण्याः स्तनं पयोधरम्, पिबति=धयति, आमीलित-लोचनः=आ ईषत् मीलिते मुद्रिते लोचने नेत्रे येन स तादृशः, एषः=पुरो दृश्यमानः, मृगपतिः=सिंहः, शशिकरधवलम्=शशिनः हिमांशोः कराः रश्मयः तद्वत् धवलं स्वच्छम्, सटाभारम्=सटानां जटानां भारः समूहः तम्, मृणालक लापाशङ्किभिः=मृणालानां कमलनालानां कलापं समूहम् आशङ्कन्ते सम्भा-वयन्ति इति तच्छीलाः तैः, द्विरदकलभैः=गजशावकैः, आकृष्यमाणम्=अवकृष्यमाणम्, बहु=अत्यन्तम्, मन्यते=समादरं करोति ।

**टिप्पणी**—अपहाय—अप+हा+क्त्वा—ल्यप् । शाद्वल—(शादाः हरित-तृणानि सन्ति अस्मिन् इति शाद्वलः) हरी घास से अभिव्याप्त प्रदेश । शिखिनः-शिखा+इनि; ष० ए० व० । आमीलितलोचनः—कुछ-कुछ नेत्र बन्द किये हुए । जटा समूह में मृणाल समूह के भ्रम होने से भ्रान्तिमान् अलङ्कार है । साथ ही लुप्तोपमा तथा स्वभावोक्ति है ।

इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः स्नातेभ्यः फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि संजातदयाः कर्णतालैः करिणः। किं बहुना तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्तेऽस्य भगवतः किं पुनः सचेतनाः प्राणिनः।

**हिन्दी-अनुवाद**—इस तपोवन में चञ्चलता को छोड़कर यह वानर समूह स्नान किए हुए मुनिकुमारकों के लिए फल ला रहा है। और ये हाथी—मदोन्मत्त होते हुए भी—कपोलपाली (गलपट) पर बैठे हुए तथा मदजल पीने के कारण (अथवा) अचञ्चल भ्रमरसमूह को—दया उत्पन्न हो जाने के कारण—कान के थपेटों से भगा नहीं रहे हैं। अधिक (कहने) से क्या लाभ! ऊपर उठती हुई तापसजनों के अग्निहोत्रों की धूमपंक्तियों के कारण निरन्तर प्राप्त की गई काले मृगचर्म रूपी उत्तरीयवस्त्र की शोभावाले, फल और मूल (जड़) को धारण करने वाले वल्कल (छाल) धारण करने वाले चैतन्य विहीन वृक्ष भी इन भगवान् (जाबालि) के आश्रमस्थ व्रतधारियों की भांति दिखाई पड़ रहे हैं जो कि ऊपर उठती हुई—तापसजनों के अग्निहोत्रों की—धूमलेखाओं के कारण प्राप्त हुई, काले मृगचर्म रूपी उत्तरीयवस्त्र की शोभा वाले हैं, जो फल एवं कन्दमूल पर आश्रित हैं, जो वल्कलवसन धारण करने वाले हैं तथा 'निश्चेतन' अर्थात् अनपेक्षित सांसारिक ज्ञान से शून्य अथवा सर्वतोभावेन तपस्संलग्न हैं। तब फिर सचेतन प्राणियों का क्या कहना! (अर्थात् वे तो इस प्रकार के होते ही हैं।)

**संस्कृत-व्याख्या**—इह = अस्मिन् तपोवने, अपगतचापलम् = अपगतं दूरीभूतं चापलं चपलता यस्य तादृशम्, इदम् = पुरोदृश्यमानम्, कपिकुलम् = कपीनां वानराणां कुलं समूहः, स्नातेभ्यः = कृतस्नानेभ्यः, मुनिकुमारकेभ्यः = मुनीनाम् ऋषीणाम् कुमारकाः बालकाः तेभ्यः, फलानि = सस्यानि, उपनयति = आहरति, एते = इमे पुरो दृश्यमानाः, च = समुच्चयार्थकमिदम्, करिणः = गजस्य,

**मदान्धाः अपि**=मदोन्मत्ता अपि, **संजातदयाः**=संजाता दया कृपा येषु ते तादृशाः सन्तः, **गण्डस्थलीभाञ्जि**=करटस्थलस्थानि, **मदजलपाननिश्चलानि**=मदस्य जलं मदजलं दानवारि तस्य पानेन सेवनेन निश्चलानि स्थिराणि, **मधुकरकुलानि**=मधुकराणां भ्रमराणां कुलानि समूहान्, **कर्णतालैः**=कर्णयोः तालाः तैः श्रवणचपेटैः, **न निवारयन्ति**=न अपसारयन्ति, **बहुना**=अधिकेन, **किम्**=किं प्रयोजनम्, न कोऽपि लाभः, **अस्य**=पुरोदृश्यमानस्य, **भगवतः**=महात्मनः जाबालेः आश्रमे इति शेषः, **निश्चेतनाः**=जडाः, **तरवः अपि**=वृक्षाः अपि, **अनिशम्**=सततम्, **उत्सर्पन्तीभिः**=उद्गच्छन्तीभिः, **तापसाग्निहोत्रधूमलेखाभिः**=तापसानां तपस्विनां यानि अग्निहोत्राणि यज्ञाः तेषां धूमलेखाभिः अग्निकेतनधाराभिः, **उपपादितकृष्णाजिनोत्तरासङ्गशोभाः**=उपपादिता विहिता कृष्णाजिनस्य कृष्णसारमृगचर्मणः उत्तरासङ्गस्य उत्तरीयस्य शोभा छविः येषां ते, **सनियमाः इव**=नियमैः सह वर्तमानाः सनियमाः व्रतिनः इव, **लक्ष्यन्ते**=दृश्यन्ते, **किं पुनः**=किंभूयः, तेषां विषये ये, **सचेतनाः**=ज्ञानवन्तः, **प्राणिनः**=मानवादयः ।

**टिप्पणी–कर्णतालैः**–कानों के थपेड़े **उत्सर्पन्तीभिः**–ऊपर को उठती हुई धूमलेखा । उठती हुई धूमलेखा मानो । नियमधारी वृक्षों के कृष्णमृगचर्मधारण की शोभा का सम्पादन कर रही थी । उत्+सृप्+ङीप्; तृ० ब० व० । **निश्चेतनः**–निर्गतः चेतनायाः । 'सनियमा इव' में गुणोत्प्रेक्षालङ्कार है । 'कृष्णाजिनः…' इत्यादि में लुप्तोपमालंकार है ।

इत्येवं चिन्तयन्तमेव मां तस्यामेवाशोकतरोरधश्छायायामेकदेशे स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्तिनि कुशासने समुपाविशत् । आलोक्य तु मां सर्व एव मुनयः 'कुतोऽयमासादितः शुकशिशुः' इति तमासीनमपृच्छन् । असौ तु तानब्रवीत्–अयं मया स्नातुमितो गतेन कमलिनीसरस्तीरतरुनीडपतितः शुकशिशुरातपजनितक्लान्तिरुत्तप्तपांसुपटलमध्यगतो दूरनिपतनविह्वलतनुरल्पावशेषायुरासादितस्तपस्विदुरारोहतया च तस्य वनस्पतेर्न शक्यते स्वनीडमारोपयितुमिति जातदयेनानीतः ।

**हिन्दी-अनुवाद**—इस प्रकार बात करते हुए मुझको उसी रक्ताशोक वृक्ष की छाया में एक ओर रखकर (मुनिकुमार) हारीत पिता के चरणों में विनत होकर तथा प्रणाम निवेदित कर कुछ दूर पर विद्यमान कुशासन पर बैठ गया। मुझे तो देखकर सभी मुनियों ने 'यह सुए का बच्चा कहाँ से मिला ?' इस प्रकार बैठे हुए उस (मुनिकुमार हारीत) से पूछा। हारीत ने उनसे कहा—'पद्मसरोवर के तटवर्ती (सेमर) वृक्ष के नीड घोंसले से गिरा हुआ, गर्मी के कारण उत्पन्न थकावट वाला, भभकते धूलिसमूह में पड़ा हुआ, ऊँचाई से गिरने के कारण व्याकुल शरीर वाला तथा अत्यल्प बची-खुची आयु वाला यह सुग्गे का बच्चा स्नान करने के लिए यहाँ से गये हुए—मुझको प्राप्त हुआ। उस सेमरवृक्ष के तपस्विजनों द्वारा न चढ़े जा सकने योग्य होने के कारण चूंकि (इसका) अपने घोंसले पर चढ़ाया जाना असम्भव नहीं था इसलिए दयावश (साथ) लाया गया।

**संस्कृत-व्याख्या**—इत्येवम्=पूर्वोक्तविधिना, चिन्तयन्तम् एव=विचारयन्तम् एव, माम्=वैशम्पायनम्,तस्यामेव=पूर्वनिर्दिष्टायाम् एव,अशोकतरोः=अशोकपादपस्य, अधश्छायायाम्=अधस्तनेऽनातपे, एकदेशे=एकभागे, स्थापयित्वा=निधाय, हारीतः=एतदाख्यः जाबालिपुत्रः, पादौ=पितुः चरणौ, उपगृह्य=संस्पृश्य, कृताभिवादनः=कृतं विहितम् अभिवादनं प्रणामः येन सः तादृशः, पितुः=तातस्य जाबालेः, अनतिसमीपवर्तिनि=न अतिसमीपे वर्तते इति तच्छील तस्मिन् किञ्चिद्दूरस्थे, कुशासने=कुशानां दर्भाणाम् आसने विष्टरे, समुपाविशत्=उपविष्टः, तु=पुनः, माम्=वैशम्पायनम्, आलोक्य=प्रेक्ष्य, सर्वे एव=सकलाः एव, मुनयः=ऋषयः, अयम्=पुरो दृश्यमानः, शुकशिशुः=कीरपोतः, कुतः=कस्मात् स्थानात्, आसादितः=प्राप्तः, इति=एवम्, आसीनम्=उपविष्टम्, तम=हारीतम्, अपृच्छन्=पृष्टवन्तः, तु=पुनः असौ=हारीतः, तान्=मुनीन्, अब्रवीत्=जगाद, अयम्=पुरो दृश्यमानः, शुकशिशुः=कीरपोतः, अस्मात्=आश्रमात्, स्नातुम्=अवगाहितुम्, गतेन=प्रस्थितेन, मया=हारीतेन, कमलिनीसरस्तीरतरुनीडपतित=कमलिनीनां नलिनीनां सरः जलाशयः पद्मसरः तस्य तीरे तटे यः तरुः द्रुमः तस्य नीडात् कुलायात्

पतितः भ्रष्टः, आतपजनितक्लान्तिः=आतपेन सूर्यतेजसा जनिता उत्पादिता क्लान्तिः श्रमः यस्मिन् स तादृशः, उत्तप्तपांसुपटलमध्यगतः=सन्तप्तः उष्णीकृतः यः पांसुपटलः रेणुसमूहः तस्य मध्यगतः अभ्यन्तरवर्ती, दूरनिपतनविह्वलतनुः=दूरात् उच्चस्थानात् यत् निपतनं भ्रंशः तेन विह्वला विकला तनुः देहः यस्य तादृशः [illegible], अल्पावशेषायुः=अल्पं न्यूनम् अवशेषम् अवशिष्टम् आयुः वयः जीवनं यस्य स तादृशः, आसादितः=प्राप्तः, तस्य=पद्मसरस्तीरस्थितस्य तरोः=पादपस्य, तपस्विदुरारोहतया=दुःखेन आरोढुं शक्यः दुरारोहः दुरधिरोहणः तपस्विभिः ऋषिभिः दुरारोहः तपस्विदुरारोहः तस्य भावः तत्ता तया, अयं स्वनीडम्=निजकुलायम्, आरोपयितुम्=प्रापयितुं, न शक्यते=न पार्यते, इति हेतोः, जातदयेन=जाता समुत्पन्ना दया करुणा यस्मिन् तादृशेन मया, अयम्, आनीतः=अस्मानायि।

टिप्पणी–चिन्तयन्तमेव–विचार करते हुये ही। चिन्त्+शतृ; द्वि० ए० व०। अभिवादन–अपने नाम गोत्र का उच्चारण करते हुए चरणस्पर्श करने की क्रिया। अभिवादन की विशेषता–"अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम्॥"–दुरारोह–जिस पर चढ़ना कठिन हो। दुर्+आ+रुह्+खल्। आनीत–आ+नी+क्त।

तद्यावदयमप्ररूढपक्षतिरक्षमोऽन्तरिक्षमुत्पतितुं तावदत्रैव कस्मिंश्चिदाश्रमतरुकोटरे मुनिकुमारकैरस्माभिश्चोपनीतेन नीवारकणनिकरेण विविधफलरसेन च संवर्ध्यमानो धारयतु जीवितम्। अनाथपरिपालनं हि धर्मोऽस्मद्विधानाम्। उद्भिन्नपक्षतिस्तु गगनतलसंचरणसमर्थो यास्यति यत्रास्मै रोचिष्यते। इहैवोपजातपरिचयः स्थास्यति इत्येवमादिकमस्मत्संबद्धमालापमाकर्ण्य किंचिदुपजातकुतूहलो भगवान् जाबालिरीषदावलितकन्धरः पुण्यजलैः प्रक्षालयन्निव मामतिप्रशान्तया दृष्टया दृष्ट्वा सुचिरमुपजातप्रत्यभिज्ञान इव पुनः पुनर्विलोक्य 'स्वस्यैवाविनयस्य फलमनेनानुभूयते' इत्यवोचत्। स हि भगवान्

कालत्रयदर्शी तपः प्रभावाद् दिव्येन चक्षुषा सर्वमेव करतलगतमिव जगदवलोकयति, वेत्ति च जन्मान्तराण्यप्यतीतानि। कथयत्यागामिनमप्यर्थम्, ईक्षणगोचरगतानां च प्राणिनामायुषः संख्यामावेदयति ।

**हिन्दी-अनुवाद**—अतएव जब तक पक्षमूल न उगने के कारण आकाश में उड़ने के लिए यह समर्थ नहीं होता तब तक यहीं किसी आश्रमस्थ वृक्ष के कोटर में—मुनियों के बच्चों तथा हम लोगों द्वारा लाए गये जंगली धान के कणसमूह तथा नाना प्रकार के फलों के रस से पालन-पोषण किया जाता हुआ—जीवन धारण करे। क्योंकि दीनजनों का संरक्षण हम जैसे लोगों (तपस्वियों) का धर्म है। पंख उग जाने पर, गगन मण्डल में उड़ान भरने लायक बनकर जायेगा, जहाँ इसकी रुचि होगी। अथवा परिचित हो जाने पर यहीं (तपोवन में ही) रह जायेगा। इस प्रकार के अनेक मद्विषयक कथनोपकथन सुनकर उत्पन्न हुए कुछ कुतूहल वाले भगवान् जाबालि तनिक गर्दन मोड़कर—मानों पवित्र जलराशि से मुझे धोते हुये—अत्यन्त प्रसन्न दृष्टि से बड़ी देर तक देखकर तथा उत्पन्न हुए प्रत्यभिज्ञान (पुरानी पहचान वाले व्यक्ति) की भाँति बारम्बार निहार कर बोले—'अपने ही अशिष्ट आचरण का फल यह भुगत रहा है।' क्योंकि (भूत-भविष्य-वर्तमान) त्रिकालदर्शी वह भगवान् जाबालि तपश्चर्या के प्रभाव से दिव्य दृष्टि से सम्पूर्ण भूतल को ही हथेली पर आये हुए की भाँति देखते थे तथा बीते हुए अन्यान्य जन्मों को भी जानते थे, भावी विषयों (घटनाओं) को भी कहते थे तथा दृष्टिपथ में आये हुए प्राणियों की आयु की इयत्ता बता देते थे।

**संस्कृत-व्याख्या**—तत् =तस्माद्धेतोः, यावत् =यावत्समयपर्यन्तम्, अयम् =शुकशावकः, अप्ररूढपक्षतिः=न प्रकर्षेण पूर्णतया रूढा उत्पन्ना पक्षतिः पक्षमूलं यस्य तादृशः, अन्तरिक्षम् =गगनम्, उत्पतितुम् =उड्डयितुम्, अक्षमः =असमर्थः,तावत् =तावत्कालपर्यन्तम्,अत्रैव = अस्मिन्नेव आश्रमे,कस्मिंश्चित् =कस्मिन्नपि एकस्मिन्, आश्रमतरुकोटरे=आश्रमस्य तपोभूमेः ये तरवः द्रुमाः तेषां कोटरे स्कन्धविवरे, मुनिकुमारकैः =ऋषिशिशुभिः, अस्माभिश्च =मया

सहितैः मुनिभिश्च, **उपनीतेन**=आनीतेन, **नीवारकणनिकरेण**=नीवारस्य मुनि-धान्यविशेषस्य कणानां तण्डुलानां निकरेण समूहेन, **विविधफलरसेन च**=विवि-धानां बहुप्रकाराणां फलानां सत्यानां रसेन द्रवेण च, **संवर्ध्यमानः**=वृद्धिं प्राप्य-माणः, **जीवितम्**=जीवनम्, **धारयतु**=दधातु, **हि**=यतः, **अस्मद्विधानाम्**=वयं मुनयः विधाः प्रकाराः येषां तेषाम् अस्मत्सदृशानां साधूनाम्, **अनाथपरिपा-लनम्**=अनाथानाम् दीनानां परिपालनं संरक्षणम्, **धर्मः**=कर्त्तव्यम्, **तु**=पुनः, **उद्भिन्नपक्षतिः**=उद्भिन्ना स्फुटिता पक्षतिः पक्षमूलं यस्य स तादृशः, **यत्र**=यस्मिन् स्थाने, गमनं व्रजनम् **अस्मै**=शुकशावकाय, **रोचिष्यते**=रुचिकरं भविष्यति, **तत्र यास्यति**=गमिष्यति, **वा**=अथवा, **उपजातपरिचयः**=उपजातः उत्पन्नः परिचयः संस्तवः यस्य सः तादृशः सन्, **इहैव**=अस्मिन् आश्रमे एव, **स्थास्यति**=निवत्स्यति इति, **एवमादिकम्**=एवम् इत्थंभूतं वृत्तम् आदौ यस्य तम्, **अस्मत्सम्बद्धम्**=मया वैशम्पायनेन संबद्धं बद्धं मद्विषयकमित्यर्थः, **आलापम्**=संलाप प्रश्नोत्तररूपम्, **आकर्ण्य**=श्रुत्वा, **किञ्चिदुपजातकुतूहलः** =किञ्चित् स्वल्पम् उपजातम् उत्पन्नं कुतूहलं कुतुकं यस्य स तादृशः, **भगवान्** ऐश्वर्यशाली, जाबालिः, **ईषदावलितकन्धरः**=ईषत् किञ्चित् आवलिता आनमिता कन्धरा ग्रीवा येन सः, **पुण्यजलैः**=पुण्यानि सुकृतानि एव जलानि सलिलानि तैः, **प्रक्षालयन् इव**=धौतीकुर्वन् इव, **माम्**=वैशम्पायनम्, **अति-प्रशान्तया**=अत्यन्तशान्तिसम्पन्नया, **दृष्टया**=चक्षुषा, **सुचिरम्**=बहुकालं यावत्, **दृष्ट्वा**=विलोक्य, **उपजातप्रत्यभिज्ञानः इव**=उपजातं प्रत्यभिज्ञानं 'सोऽयम्' इत्याकारकं ज्ञानं यस्यः स इव, **पुनःपुनः**=मुहुर्मुहुः, **विलोक्य**=दृष्ट्वा, **अनेन**=शुकशावकेन, **स्वस्य**=आत्मनः, **एव अविनयस्य**=अशिष्टाचारस्य, **फलम्**=परिणामः, **अनुभूयते**=भुज्यते, **इति**=एवम्, **अवोचत्**=जगाद, **हि**=निश्चयेन, **सः**=असौ, **भगवान्**=महात्मा जाबालिः, **कालत्रयदर्शी**=कालानाम् अतीतानागतवर्तमानानां त्रयं त्रिकं पश्यतीति तच्छीलः त्रिकालदर्शी, **तपःप्रभावात्**=तपसः तपश्चर्यायाः प्रभावः तेजः तस्मात्, **दिव्येन**=अलौकिकेन, **चक्षुषा**=दृष्ट्या, **सर्वम् एव**=सकलम् एव, न तु अंशमात्रमित्यर्थः, **जगत्**=भुवनम्, **करतलगतम् इव**=हस्ततलस्थितम् इव, **अवलोकयति**=पश्यति, **च**=

तथा, अतीतानि=गतानि, जन्मान्तराणि=अन्यत् जन्म जन्मान्तरं तानि भवान्तराणि, अपि किं पुनः वर्तमानम्, वेत्ति=जानाति, आगामिनम्=आगमिष्यन्तम् अर्थम्=विषयम् अपि, कथयति=निरूपयति, च=तथा, ईक्षणगोचरगतानाम् =ईक्षणयोः नयनयोः गोचरः विषयतां गतानां प्राप्तानाम्, प्राणिनाम्=जीवानाम्, आयुषः=जीवितव्यस्य, संख्याम्=इयत्ताम्, आवेदयति=बोधयति।

**टिप्पणी**–अप्ररूढ़–प्र+रुह्=क्त। ईषदावलितकन्धरः–थोड़ी गरदन मोड़कर, 'ईषत्' पद से जाबालि मुनि की गम्भीरता प्रकट हो रही है 'किञ्चिदुपजातकुतूहलः' कथन से थोड़ा कुतूहल उत्पन्न उत्पन्न होना थोड़ी गरदन मोड़कर अति प्रशान्त दृष्टि से देखना. ये सब क्रियाएँ उनकी धीरता की पोषक हैं। संवर्ध्यमानः–सम्+वृध्+यक्+शानच्। 'अस्मै रोचिष्यते'–'रुच्यर्थानां प्रीयमाणः' से चतुर्थी। प्रत्यभिज्ञान–पूर्वदृष्ट व्यक्ति का कुछ दिनों के पश्चात् पुनः साक्षात्कार होने पर 'यह वही व्यक्ति है' इस प्रकार का ज्ञान प्रत्यभिज्ञान कहलाता है। 'पुण्यजलैः' में निरङ्गकेवल रूपक है। 'प्रक्षालयन्निव' में क्रियोत्प्रेक्षालङ्कार है।

ततः सर्वैव सा तापसपरिषच्छ्रुत्वा विदिततत्प्रभावा कीदृशोऽनेनाविनयः कृतः, किमर्थं वा कृतः क्व वा कृतः, जन्मान्तरे व कोऽयमासीद् इति कुतूहलिन्यभवत्। उपनाथितवती च तं भगवन्तम् आवेदय, प्रसीद भगवन्! कीदृश्याविनयस्य फलमनेनानुभूयते, कश्चायमासीज्जन्मान्तरे, विहगजातौ का कथमस्य संभवः, किमभिधानो वायम्। अपनयतु नः कुतूहलम्। आश्चर्याणां हि सर्वेषां भगवान् प्रभवः।

**हिन्दी-अनुवाद**—इसके बाद, उनके माहात्म्य को जानने वाली सारी की सारी वह मुनिसभा (पूर्वोक्त वक्तव्य को) सुनकर—'इसने किस प्रकार का अशिष्टाचरण किया था? अथवा किसलिये किया था? अथवा कहाँ (किस प्रदेश में) किया था! अथवा पूर्वजन्म में यह कौन था?' इस प्रकार कौतुक सम्पन्न (जिज्ञासु) हो उठी तथा बारम्बार उस भगवान् जाबालि से अभ्यर्थना करने लगी—'हे भगवन्! बताइये, प्रसन्न हो जाइये। किसी प्रकार

की उद्दण्डता का फल यह भोग रहा है ? और पूर्वजन्म में यह था कौन ? अथवा पक्षियोनि में कैसे इसका जन्म हुआ ? अथवा इसका नाम क्या है ? हम लोगों का आश्चर्य दूर कीजिए ! क्योंकि भगवान् (आप) समस्त आश्चर्यों के उद्भवस्थान हैं।

**संस्कृत-व्याख्या**—ततः=तदनन्तरम्, सर्वा एव=समस्तैव, सा=पूर्ववर्णिता, तापसपरिषद्=तापसानां तपस्विनां पारषद् सभा, श्रुत्वा=शुकवृत्तान्तं निशम्य, विदिततत्प्रभावा=विदितः ज्ञातः तस्य महर्षेः प्रभावः माहात्म्यं येन सा, अनेन=शुकशिशुना, कीदृशः=किंप्रकारः, अविनयः=असदाचारः, कृतः=विहितः, वा=अथवा, किमर्थम्=कस्मै हेतवे, कृतः, अथवा, क्व=कस्मिन् स्थाने, कृतः, अथवा, अयम्=एषशुकशावकः, जन्मान्तरे=अन्यत् जन्म जन्मान्तरं तस्मिन् पूर्वजन्मनि, कः आसीत्=अभवत्, इति=इत्थम्, कुतूहलिनी=कौतुकवती, अभवत्=बभूव, च=तथा, तम्=पूर्वोक्तम्, भगवन्तम्=महात्मानं जाबालिम्, उपनाथितवती=प्रार्थयामास, भगवन्=महात्मन्, प्रसीद=प्रसन्नो भव, आवेदय=कथय, अनेन=शुकशिशुना, कीदृशस्य=किंप्रकारस्य, अविनयस्य=अशिष्टतायाः, फलम्=भोगः, अनुभूयते=भुज्यते, च=तथा, अयम्=शुकशिशुः, जन्मान्तरे=अन्यत् जन्म जन्मान्तरं तस्मिन् पूर्वजन्मनि, कः आसीत् =अभवत्, वा=अथवा, अस्य=शुकशावकस्य, विहगजातौ=विहगः खगः तस्य जातौ योनौ, वंशे वा, कथम्=केन हेतुना, संभवः=उत्पत्तिः, वा=अथवा, अयम्=शुकशिशुः, किमभिधानः=किम् अभिधानं यस्य सः किंनामा, नः=अस्माकम्, कुतूहलम्=आश्चर्यम्, अपनयतु=दूरीकरोतु, हि=यतः, भगवान्=माहात्म्यवान् भवान्, सर्वेषाम्=समस्तानाम्, आश्चर्याणाम्=विस्मयानाम्, प्रभवः=हेतुः।

**टिप्पणी**—**परिषद्**—'समज्या परिषद् गोष्ठी सभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः'। इत्यमरः। **श्रुत्वा**—श्रु+क्त्वा=श्रुत्वा। **कुतूहल**—कौतुक, जिज्ञासा, आश्चर्य। "कौतूहलं कौतुकं च कुतुकं च कुतूहलम्" इत्यमरः। **उपनाथितवती**—उप+नाथ+क्तवतु+ङीप्। **अभिधान**—"आख्या-

ह्वेऽभिधानं च नामधेयं च नाम च" इत्यमरः। भगवान् – भग + मतुप + भगवत्; प्र० ए० व।

इत्येवमुपयाचितस्तपोवनपरिषदा स महामुनिः प्रत्यवदत्—अतिमहदिदमाश्चर्यमाख्यातव्यम्। अल्पशेषमहः। प्रत्यासीदति च नः स्नानसमयः। भवतामप्यतिक्रामति देवार्चनविधिवेला। तदुत्तिष्ठन्तु भवन्तः सर्व एवाचरन्तु यथोचितं दिवसव्यापारम्। अपराह्णसमये भवतां पुनः कृतमूलफलाशनानां विस्रब्धोपविष्टानामादितः प्रभृति सर्वमावेदयिष्यामि योऽयम्, यच्चानेन कृतमपरस्मिन् जन्मनि, इह च लोके यथास्य संभूतिः, अयं च तावदपगतक्लमः क्रियतामाहारेण। नियतमयमप्यात्मनो जन्मान्तरोदन्तं स्वप्नोपलब्धमिव मयि कथयति सर्वमशेषतः स्मरिष्यति इत्यभिदधदेवोत्थाय सह मुनिभिः स्नानादिकमुचितदिवसव्यापारमकरोत्।

**हिन्दी-अनुवाद**—मुनिसभा द्वारा इस प्रकार अभ्यर्थित होकर उन महामुनि (जाबालि) ने कहा–"वर्णन करने योग्य यह आश्चर्य (पूर्ण वृत्तान्त) अत्यन्त विशाल है। दिन थोड़ा रह गया है। हमारे स्नान का समय हो रहा है। आप लोगों की भी देवपूजन—वेला बीतती जा रही है। इसलिए आप लोग उठें। सभी लोग यथायोग्य दैनिक-कृत्य सम्पादित कर लें दुबारा कन्दमूल एवं फलों का आहार किए हुए तथा सावधान (स्वस्थचित्त) होकर बैठे हुए आप लोगों के लिए अपराह्ण वेला में प्रारम्भ से लेकर समस्त वृत्तान्त निवेदित करूँगा। (पूर्वजन्म में) यह जो था और पूर्वजन्म में इसने जो कुछ किया तथा इस पृथ्वी तल पर जैसे इसका जन्म हुआ। तब तक इसे भी खिला-पिला कर विगतश्रम (थकावटहीन) बनाइये। निश्चय ही (अपनी रामकथा) मेरे वर्णित करने पर वह (सुआ) भी मानो स्वप्न में प्राप्त हुए (अपने) पूर्वजन्म के सम्पूर्ण वृत्तान्त को अमूलचूड स्मरण कर लेगा।" इस प्रकार कहते हुए ही उन मुनियों के साथ उठकर स्नानादि यथोचित दैनिक कार्यकलाप सम्पन्न किया।

**संस्कृत-व्याख्या**—**इत्येवम्**=अनेन विधिना, **तपोधनपरिषदा**=तपः एव धनं येषां ते तपोधनाः तापसाः तेषां परिषद् समज्या तया, **उपयाचितः**=प्रार्थितः, **सः**=पूर्वोक्तः, **महामुनिः**=महर्षिः जाबालिः, **प्रत्यवदत्**=प्रत्युवाच, **इदम्**=शुकशिशपरिचयात्मकम्, **अतिमहत्**=अतिविस्तृतम्, **आश्चर्यम्**=विस्मयः, **आख्यातव्यम्**=विस्तरेण वक्तव्यम्, **अहुः**=वासरः, **अल्पशेषम्**=स्वल्पावशिष्टम्, **च**=तथा, **नः**=अस्माकम्, **स्नानसमय**=अवगाहकालः, **प्रत्यासीदति**=निकटमायाति, **भवताम्**=युष्माक मुनीनाम् अपि, **देवार्चनविधिवेला**=देवस्य परमेश्वरस्य अर्चनं पूजनं तस्य विधिः विधानं तस्य वेला कालः, **अतिक्रामति**=अत्येति, **तत**=तस्मात् कारणात्, **भवन्तः**=यूयम्, **उत्तिष्ठन्तु**=उत्थानं कुर्वन्तु, **सर्वे एव**=समस्ताः एव, **यथोचितम्**=उचितम् अनतिक्रम्य यथायोग्यम्, **दिवसव्यापारम्**=दिवसस्य दिनस्य व्यापारः तं दैनिकक्रियाम्, **आचरन्तु**=कुर्वन्तु,**अपराह्णसमये**=अपराह्णश्चासौ समयः अपराह्णसमयः तस्मिन् सायंकाले, **पुनः**=भूयः, **कृतमूलफलाशनानाम्**=कृतं विहितं मूलानां कन्दानां फलानां सस्यानां च अशनं भोजनं यैः तेषाम्, **विस्रब्धोपविष्टानाम्**=विस्रब्धं विश्वस्तं यथा स्यात् तथा उपविष्टानाम् स्थितानाम्, **भवताम्**=युष्माकम्, **आदितः**=प्रारम्भतः, **प्रभृति**=आदाय, **सर्वम्**=समस्तम्, **आवेदयिष्यामि**=कथयिष्यामि । किं तदाख्यातव्यमित्याह, **अयम्**=शुकशिशुः यः आसीत्; **अनेन**=शुकशिशुना, **यत्**=कर्म, **कृतम्**=विहितम्, **अपरस्मिन्**=पूर्वस्मिन्, **जन्मनि**=जन्मान्तरे, भवे, **इह**=अस्मिन्, **लोके**=संसारे च, **अस्य**=शुकशिशोः, **यथा**=येन हेतुना, **संभूतिः**=उत्पत्तिः,**तावत्**=तत्कालपर्यन्तम्, **अयम्**=शुकशावकः, **आहारेण**=भोजनेन, **अपगतक्लमः**=अपगतः विनष्टः क्लमः श्रमः यस्य स तादृशः, **क्रियताम्**=विधीयताम्, **नियतम्**=निश्चितम्, **अयम् अपि**=शुकशावकः अपि, **मयि**=जाबालौ, **कथयति**=आवेदयति सति, **सर्वम्**=समस्तम्, **जन्मान्तरोदन्तम्**=पूर्वजन्मवृत्तम्, **स्वप्नोपलब्धम् इव**=स्वप्ने स्वापे उपलब्धं प्राप्तम् इव, **अशेषतः**=पूर्णतः, **स्मरिष्यति**=स्मरणं करिष्यति, **इति**=इत्थम्, **अभिदधत् एव**=कथयन् एव, **उत्थाय**=उत्थानं कृत्वा, **मुनिभिः**=ऋषिभिः, **सह**=सार्धम्, **स्नानादिकम्**=स्नानम् अवगाहनम्

आदौ आरम्भे यस्य तम्, उचितदिवसव्यापारम् =उचितः योग्यः स चासौ दिवसव्यापारः दैनन्दिक्रिया तम्, अकरोत्=विहितवान् ।

**टिप्पणी**—प्रत्यवदत्—प्रति+वद धातु लङ् लकार प्र० पु० ए० व० । आख्यातव्यम्—आङ्+चक्षिङ् (ख्या) +तव्यत्, अभिदधत्—कहते हुए । अभि +धा+शतृ । उत्थाय—उत्+स्था+क्त्वा—ल्यप् ।

अनेन च समयेन परिणतो दिवसः । स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत् । ऊर्ध्वमुखैरर्कबिम्बार्पितदृष्टिभिरूष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपस्तनिमानमभजत् उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः पारावतपादपाटलरागो रविरम्बरतलादवालम्बत । आलोहितांशुजालजलशयनमध्यगतस्य मधुरिपोर्विगलन्मधुधारामिव नाभिनलिनं प्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत । विहाय धरणीतलमुन्मुच्य च कमलिनीवनानि शकुनय इव दिवसावसाने तरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत । आलग्नलोहितातपच्छेदा मुनिभिरालम्बितलोहितवल्कला इव तरवः क्षणमदृश्यन्त ।

**हिन्दी-अनुवाद**—इस समय तक दिन ढल गया । स्नान से निबटे हुए तपस्विवर्ग ने (लाल चन्दन एवं लाल फूल आदि द्वारा) पूजाविधि निष्पन्न करते हुए भूतल पर जिसे प्रदान किया था उस रक्तचन्दन के अङ्गराग को आकाशमण्डल में विराजमान सूर्य ने मानो (रक्तवर्ण होकर) साक्षात् रूप से धारण कर लिया । ऊपर की ओर मुख उठाए हुए, सूर्यमण्डल पर आँखें टिकाए हुए तथा उष्मा का पान करने वाले तपोवनों द्वारा मानों भलीभाँति पिये जाते हुए कान्तिविस्तार वाला अतएव अत्यल्प प्रकाश से युक्त (सूर्य) क्षीणता को प्राप्त हो गया । उदीयमान सप्तर्षिमण्डल के स्पर्श को मानों बचाने की इच्छा से 'चरणों' (अर्थात किरणों) को समेट कर, कपोतपक्षियों के चरणों की भाँति

श्वेतरक्त अरुणिमावाला सूर्य गगनमण्डल से (नीचे) लटक गया। कुछ-कुछ ललछौंह किरणपुञ्जवाला तथा पश्चिमी समुद्र में प्रतिबिम्बित होने वाला सूर्य-मण्डलजलशय्या पर विद्यमान 'मधुरिपु' भगवान् विष्णु के झरती हुई मकरन्द-धारा वाले नाभिकमल के समान दिखाई पड़ा। भूतल को छोड़कर तथा कमलिनियों के वनों को बिदा देकर दिनान्तवेला में वृक्षों की चोटियों तथा पर्वत-शिखरों पर 'स्थिति' अर्थात् बसेरा लेने वाले पक्षियों की भाँति सूर्यकिरणों ने (भी) दिन ढल-जाने पर धरातल को छोड़ कर एवं कमलिनियों के वनों को बिदा देकर तरुशिखरों तथा पर्वताग्रभागों पर स्थान ले लिया। सूर्य के) लोहित वर्ण वाले प्रकाशखण्डों से ईषत् सम्बद्ध आश्रम के वृक्ष क्षण भर के लिए (ऐसे) दिखाई पड़े मानो मुनियों द्वारा (शोषणार्थ) लटकाए गए लाल रंग वाले वल्कलवस्त्रों से संवलित हों।

**संस्कृत व्याख्या**—**अनेन**=एतेन च, **समयेन**=कालेन, **दिवसः**=वासरः, **परिणतः**=समाप्तप्रायः, **स्नानोत्थितेन**=स्नानात्, अवगाहनात्, **उत्थितेन**=निवृत्तेन **मुनिजनेन**=ऋषिवर्गेण, **अर्घविधिम्**=अर्घस्य विधिः अर्घविधिः तं, रक्तचन्दनमिश्रितजलदानात्मकं पूजाकर्म, **उपपादयता**=सम्पादयता, **यः**=रक्त-चन्दनाङ्गरागः, **क्षितितले**=भूतले, **दत्तः**=अर्पितः, **तम्**=मुनिजनप्रदत्तम्, **रक्तचन्दनाङ्गरागं**=रक्तचन्दनं रञ्जनम् एव अङ्गरागः उपलेपः तम् **अम्बरत-लगतः**=गगनस्थितः, **रविः**=दिनकरः, **साक्षादिव**=प्रत्यक्षम् इव, **उद्वहत्**=अधारयत्, **ऊर्ध्वमुखैः**=ऊर्ध्वम् उपरिष्टाद् मुखम् लपनं येषां तैः, **अर्कबिम्बवि-निहितदृष्टिभिः**=अर्कस्य दिनकरस्य बिम्बे मण्डले विनिहिता स्थापिता दृष्टिः नेत्रं यैः तैः तथाभूतैः **ऊष्मपैः**=ऊष्मणं पिबन्तीति तैः पञ्चाग्नितपोऽङ्गत्वेन वह्निपायिभिः **तपोधनैः**=तप एव धनं येषां तैस्तथोक्तैः तपस्विभिः, **परिपीय-मानतेजःप्रसरः इव**=परिपीयमानः आस्वाद्यमानः तेजसां कान्तीनां प्रसरः प्रचारः समूहो वा यस्य स तादृशः इव, **विरलातपः**=विरलः स्वल्पः स चासौ आतपः आलोकः, **तनिमानम्**=क्षीणताम्, **अभजत्**=अगच्छत्, **उद्यत्सप्तर्षिसा-र्थस्पर्शपरिजिहीर्षया इव**=उद्यतः उदयं प्राप्नुवतः सप्तर्षिसार्थस्य सप्तर्षिमण्डल-स्य यः स्पर्शः पादसंसर्गः तस्य परिजिहीर्षा परिहर्तुम् इच्छा तया इव, **संहृतपादः**

=संहृताः संकोचिताः पादाः चरणाः येन सः, **पारावतपादपाटलरागः**=पारावतः कपोतः तस्य: पादवत् चरणवत् पाटलः श्वेतरक्तःरागः कान्ति यस्य सः, **रविः**=दिनकरः, **अम्बरतलात्**=गगनतलात्, **अवालम्बत**=अवातरत्, **अपरार्णवे**=अपरः पश्चिमः अर्णवः सागरः तस्मिन् **प्रतिमागतम्**=प्रतिमां प्रतिबिम्बतां गतं प्राप्तम्, **आलोहितांशुजालम्**=आ ईषत् लोहितं रक्तवर्णम् अंशुजालं रश्मिपटलं यस्य तत्, **सूर्यमण्डलम्**=भास्करबिम्बम्, **जलाशयनमध्यगतस्य**=जले सलिले यत् शयनं शय्या मध्यगतस्य मध्यस्थितस्य, **मधुरिपोः**=मधुः एतन्नामा दैत्यः तस्य रिपुः शत्रुः विष्णुः तस्य विष्णोः, **विगलन्मधुधारम्**=विगलन्त्यः स्रवन्त्यः मधुनः परागस्य धाराः स्रोतांसि यस्मात् तत्, **नाभिनलिनम् इव**=नाभेः नलिनं कमलम् इव, **अलक्ष्यत**=अदृश्यत, **दिवसावसाने**=दिवसस्य दिनस्य अवसाने समाप्तौ, **रविकिरणाः**=रवेः सूर्यस्य किरणाः मयूखाः, **शकुनयः इव**=खगाः इवः **धरणीतलम्**=भुवनतलम्, **विहाय**=त्यक्त्वा, **कमलिनीवनानि च**=कमलिनीनां पद्मिनीनां वनानि गहनानि च, **उन्मुच्य**=मुक्त्वा, **तरुशिखरेषु**=तरूणां वृक्षाणां शिखरेषु शाखाग्रेषु, **पर्वताग्रेषु च**=पर्वतानां शिखरिणाम् अग्रेषु शिखरेषु च, **स्थितिम्**=निवासम्, **अकुर्वत**=कृतवन्तः, **आलग्नलोहितातपच्छेदाः**=आ ईषत् लग्नाः संसक्ताः लोहिताः रक्तवर्णाः आतपच्छेदाः आलोकखण्डाः येषु ते, **तरवः**=पादपाः, **क्षणम्**=किञ्चित्कालम्, **मुनिभिः**=तपस्विभिः, **आलम्बितलोहितवल्कलाः इव**=आलम्बितानि आश्रितानि लोहितानि रक्तवर्णानि वल्कलानि तरुत्वचः येषु ते तादृशा इव, **अदृश्यत**=अलक्ष्यन्त ।

**टिप्पणी**–**उदवहत्**—उत्+वह्, धातु लङ् प्र० पु० ए० व० । **ऊष्मपः**—वह्निपायी तपस्वी, तपस्या करने वाले महात्मा अपने चारों ओर अग्नि जलाकर तो तप करते ही हैं, पंचम अग्नि के रूप में सूर्य की ऊष्मा का भी पान करते हैं । **जलशयननाभिनलिनम्**–जल के मध्य शय्या पर शयन करने वाले मधुदैत्य-विनाशी भगवान् विष्णु की नाभि के उस कमल के समान जिससे मधुधाराएँ निकलकर बह रही हों । **नाभिनलिनमिव'** में उपमालङ्कार है ।

अस्तमुपगते च भगवति सहस्रदीधितावपरार्णवतलादुल्लसन्ती विद्रुमलतेव पाटला संध्या समदृश्यत । यस्यामाबध्यमानध्यानम्, एकदेशदुह्यमानहोमधेनुदुग्धधाराध्वनितधन्यतरातिमनोहरम्, अग्निहोत्रवेदिविकीर्यमाणहरित्कुशम, ऋषिकुमारिकाभिरितस्ततो विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत् । क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना सन्ध्या तपोधनैरदृश्यत ।

**हिन्दी-अनुवाद**—सहस्र किरणों वाले भगवान् सूर्य के अदृश्य हो जाने पर पश्चिमी सागरतट से ऊपर उठती हुई तथा मूँगे की लता के समान पाटलवर्ण वाली सन्ध्या दिखाई पड़ी जिसमें कि आश्रमस्थान (मुनियों द्वारा) लगाए जाते हुए ध्यानकर्म वाला, एक ओर दुही जाती हुई होमधेनुओं की दुग्धधाराओं के ध्वनन से मन को आकृष्ट करने वाला, अग्निहोत्र की वेदी पर फैलाए जाते हुए हरे कुशों वाला तथा ऋषिकुमारिकाओं द्वारा दिग्देवताओं की पूजा के निमित्त चारों ओर बिखेरे जाते हुए बलि (उपहार या नैवेद्य) सम्बन्धी सिद्धान्तों वाला हो गया ।

कहीं घूम-टहल कर, सन्ध्याकाल में (घर) लौट कर आती हुई लाल पुतलियों वाली 'कपिला' तपोवन की गाय के समान—कहीं (अर्थात् पर्वतों, नदियों, वनों आदि में) पर्यटन करके, दिन ढलते ही लालरङ्ग के तारकों (नक्षत्रों) से संकुल पिङ्गलवर्ण लौटती हुई सन्ध्या को मुनिजनों ने देखा ।

**संस्कृत-व्याख्या**—**भगवति**=प्रभाववति, **सहस्रदीधितौ**=दिनकरे च, **अस्तम्**=अदृश्यताम्, **उपगते**=प्राप्ते सति, **अपरार्णवतलात्**=पश्चिमसमुद्रतीरात्, **उल्लसन्ती**=प्रस्फुरन्ती, **विद्रुमलता इव**=प्रवालपङ्क्तिः इव, **पाटला** श्वेतरक्ता, **संध्या**=सन्धिवेला, **समदृश्यत**=समलक्ष्यत, **यस्याम्**=संध्यायाम्, **आश्रमपदम्**=आश्रमभूमिः, **आबध्यमानध्यानम्**=आबध्यमानं विधीयमानं ध्यानम् एकतानवृत्तिः यत्र तत् तादृशम्, **एकदेशदुह्यमानहोमधेनुदुग्धधाराध्व-**

**नितधन्यतरातिमनोहरम्** = एकदेशे एकभागे दुह्यमानानां दोहनविषयीक्रियमाणानां होमधेनूनां यज्ञगवीनां दुग्धाराभिः पयःप्रवाहैः ध्वनितं शब्दायितम् अतएव धन्यतरं श्लाघ्यतरम् अतएव च अतिमनोहरम् अत्यधिकसुन्दरम्, **अग्निहोत्रवेदिविकीर्यमाणहरित्कुशम्** = अग्निहोत्राणां यज्ञविशेषाणां वेदिषु चतुरस्रभूमिषु विकीर्यमाणाः निक्षिप्यमाणाः हरिताः श्यामवर्णाः कुशाः दर्भाः यत्र तत् तादृशम्, **ऋषिकुमारिकाभिः** = ऋषीणां मुनीनां कुमारिकाभिः पुत्रीभिः, **इतस्ततः** = चतुर्षु दिक्षु, **विक्षिप्यमाणदिग्देवताबलिसिक्थम्** = विक्षिप्यमाणाः विकीर्यमाणाः दिग्देवताभ्यः दिक्पालेभ्यः बलिसिक्थाः उपहारान्नानि यत्र तत् तादृशम्, **अभवत्** = आसीत्, **क्वापि** = कस्मिन्नपि अज्ञातप्रदेशे, **विहृत्य** = पर्यटनं विधाय, **दिवसावसाने** = दिवसस्य दिनस्य अवसाने समाप्तौ, **परिवर्तमाना** = प्रत्यागता, **लोहिततारका** = लोहिते रक्तवर्णे तारके कनीनिके यस्याः सा, सन्ध्यापक्षे लोहिताः रक्तवर्णाः तारकाः नक्षत्राणि यस्यां सा, **कपिला** = कनकवर्णा, **तपोवनधेनुः इव** = तपोवनस्य आश्रमस्य, धेनुः गौः इव, **संध्या** = सायंसमयः, **तपोधनैः** = तापसैः, **अदृश्यत** = अलक्ष्यत ।

**टिप्पणी-भगवति**—भग + मतुप्; म को व; स० ए० व० । **उल्लसन्ती**—उत् + लस् + शतृ + ङीष् । **दिग्देवताबलिसिक्थ**—दिक्पालों के लिए दिया जाने वाला बलिरूप अन्न जो चावलों को पकाकर तैयार किया जाता है । इसे भक्तसिक्थ या पुलाव भी कहते हैं । पौराणिक मान्यता के अनुसार दशों दिशाओं के दश स्वामी हैं जिन्हें दिक्पाल कहा जाता है । ये पूर्वादिक्रम से १–इन्द्र, २–अग्नि, ३–यम, ४–नैर्ऋत, ५–वरुण, ६–मरुत्, ७–कुबेर, ८–शिव, ९–ब्रह्मा तथा १०–अनन्त हैं । **दुह्यमान**—दुह् + यक् + शानच् । **विक्षिप्यमाण**—वि + क्षिप् + यक् + शानच् । **विहृत्य**—वि + हृ + क्त्वा—ल्यप् । **कपिला**—भूरे रङ्ग की गाय, कपिलवर्ण वाली संध्या । **परिवर्तमान**—परि + वृत् + शानच् । '**विद्रुमलतेव**' तथा '**तपोवनधेनुरिव**' में **पूर्णोपमालङ्कार** है ।

अचिरप्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलपरिधाना मृणालधवलयज्ञोपवीतिनी मधुकरमण्डलाक्ष-

वलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत् । अपरसागराम्भसि पतिते दिवसकरे वेगोत्थितमम्भः सीकरनिकरमिव तारागणमम्बरमधारयत् । अचिराच्च सिद्धकन्यकाविक्षिप्तसंध्यार्चनकुसुमशबलमिव तारकितं वियदराजत । क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान इवागलदखिलः संध्यारागः ।

**हिन्दी अनुवाद**–(अपने पति स्वरूप) सूर्य के तत्काल प्रोषित (अस्तङ्गत) हो जाने पर बिछोह के कारण विह्वल, कमलकोरक रूपी कमण्डलु को धारण करने वाली, हंस रूपी श्वेतरेशमी वस्त्र पहने हुई, कमलतन्तु रूपी धवल यज्ञोपवीत से युक्त तथा भ्रमरसमूह रूपी रुद्राक्ष जपमाला का वहन करती हुई कमलिनी (अपने परदेशी प्रियतम) सूर्य के समागम-हेतु मानो व्रत का आचरण करने लगी। पश्चिमी सागर की जलराशि में सूर्य के गिर जाने पर, उस पतन के वेग से उछले हुए जलबिन्दु-समूह की भाँति नक्षत्रमण्डल को आकाश ने धारण कर लिया। थोड़ी ही देर में तारकखचित आकाशमण्डल मानो विद्याधर कन्याओं द्वारा बिखेरे गए सन्ध्याकालीन पूजापुष्पों के कारण चितकबरा सुशोभित हो उठा और क्षण भर में ही ऊर्ध्वमुख मुनिजनों द्वारा (ऊपर) छिड़के गए प्रणामकालीन अञ्जलि के जल से मानो धोया जाता हुआ सम्पूर्ण सन्ध्याराग गल गया।

**संस्कृत-व्याख्या**–**सवितरि**=भगवति भास्करे, **अचिरप्रोषिते**=अचिरं सद्यः प्रोषिते प्रवास गते, **शोकविधुरा**=शोकेन विरहदुःखेन विधुरा व्याकुला, **कमलिनी**=नलिनी, **कमलमुकुलकमण्डलुधारिणी**=कमलस्य नलिनस्य मुकुलः कोरकः एव कमण्डलुः करकः तं धारयति वहतीति सा तादृशी, **हंससितदुकूलपरिधाना**=हंसा मानसौकसः एव सितदुकूलं तत् परिधानं शाटी अधोवस्त्रं वा यस्याः सा, **मृणालधवलयज्ञोपवीतिनी**=मृणालश्वेतयज्ञसूत्रधारिणी, **मधुकरमण्डलाक्षवलयम्**=मधुकराणां भ्रमराणां मण्डलं वलय एव अक्षवलयं जपमाला तत्, **उद्वहन्ती**=धारयन्ती, **दिनपतिसमागमव्रतम् इव**=दिनपतेः सूर्यस्य

समागमाय-संमेलनाय **व्रतं** नियमः तद् इव, **आचरत्**=अपालयत्, अकरोत्, प्रोषितपतिकापक्षे कमलमुकुलवत्, हंसवत्, मृणालवत्, मधुकरमण्डलवत् इत्येवं विग्रहं कृत्वा अर्थः संगमनीयः, **दिवसकरे**=भास्करे, **अपरसागराम्भसि**= अपरः पश्चिमः सागरः समुद्रः तस्य अम्भसि जले, **पतिते**=च्युते, **अम्बरम्**= आकाशम्, **वेगोत्थितम्**=वेगेन रभसेन उत्थितम् उद्गतम्, **अम्भःसीकरनिकरम् इव**=अम्भसः सलिलस्य सीकराणां कणानां निकरः समूहः तम् इव, **तारागणम्** =नक्षत्रमण्डलम्, **अधारयत्**=दधार । **चिरात् च**=शीघ्रमेव च, **सिद्धकन्या-विक्षिप्तसंध्यार्चनकुसुमशबलं इव**=सिद्धकन्याभिः विद्याधरबालिकाभिः विक्षिप्तानि विकीर्णानि यानि संध्यार्चने सायंकालिकपूजने कुसुमानि प्रसूनानि तैः शबलम् इव कर्बुरितम् इव, **तारकितम्**=तारकाः नक्षत्राणि संजाताः अस्येति तादृशम्, **वियत्**=आकाशम्, **अराजत**=अशोभत । **क्षणेन च**=स्वल्पकालेन च, **उन्मुखेन**=उत् ऊर्ध्वं मुखं वदनं यस्य तादृशेन, **मुनिजनेन**=ऋषिवर्गेण, **ऊर्ध्वविप्रकीर्णैः**=ऊर्ध्वम् उपरिदिशि विप्रकीर्णैः विक्षिप्तैः, **प्रणामाञ्जलिसलिलैः** =प्रणामस्य नमस्कारस्य यः अञ्जलिः न्युब्जपाणिविन्यासः तस्य सलिलैः जलैः, **क्षाल्यमानः इव**=धौतःइव, **अखिलः**=समस्तः, **संध्यारागः**=संध्यायाः रागः संधिवेलालौहित्यम्, **अगलत्**=अपतत् ।

**टिप्पणी–अचिरप्रोषिते सवितरि**–कुछ समय के पूर्व ही भगवान् सूर्य के प्रवास चले जाने पर, यहाँ प्रोषित शब्द का प्रयोग करके कवि ने समासोक्ति अलंकार के द्वारा कमलिनी सविता सम्बन्ध के साथ प्रोषितपतिकानायिका तथा नायक सम्बन्ध की भी व्यञ्जना की है । **मृणालधवलयज्ञोपवीतिनी**– मृणाल ही कमलिनी का सफेद यज्ञोपवीत था, इससे यह ध्वनि निकलती है कि पुरातन समय में स्त्रियाँ भी यज्ञोपवीत धारण करती थीं । महर्षि यम ने लिखा है कि 'पुराकल्पे तु नारीणां मौञ्जीवबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥' महर्षि हारीत ने भी 'द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्या ।' कहकर ब्रह्मवादिनी स्त्रियों के यज्ञोपवीत की व्यवस्था दी है ।

**उद्वहन्ती**–उत्+वह्+शतृ+ङीप् । **तारकित**–तारक+इतच् । **अराजत**–राज् धातु लङ् प्र० पु० ए० व० । **'प्रक्षाल्यमान इव'** में **क्रियोत्प्रेक्षालङ्कार** है। **'अचिरादिव'** में–क्रियोत्प्रेक्षा तथा कमलिनी और सूर्य में स्त्री–पुरुष के व्यवहार के समारोप होने से **'समासोक्ति'** अलङ्कार है ।

क्षयमुपगतायां संध्यायां तद्विनाशदु:खिता कृष्णाजिनमिव विभावरी तिमिरोद्गमनमभिनवमवहत् । अपहाय मुनिहृदयानि सर्वमन्यदन्धकारता तिमिरमनयत् । क्रमेण च रविरस्तं गत इत्युदन्तमुपलभ्य जातवैराग्यो धौतदुकूलवल्कलधवलाम्बर: सतारान्त:पुरपर्यन्तस्थिततनुतिमिरतमालवृक्षलेखसप्तर्षिमण्डलाध्युषितमरुन्धतीसंचरणपूतमुपहिताषाढमालक्ष्यमाणमूलमेकान्तस्थितचारुतारकमृगममरलोकाश्रममिव गगनतलममृतदीधितिरध्यतिष्ठत् ।

**हिन्दी-अनुवाद**–(सखीस्वरूपा) सन्ध्या के विनष्ट हो जाने पर, उसके विनाश से दु:खी हुई रात्रि ने नवीन कृष्ण मृगचर्म के समान अभिनव अन्धकारोदय को धारण कर लिया। मुनियों के हृदयों को छोड़ कर अन्धकार ने अन्य सब कुछ आत्मसात् कर लिया अर्थात् सब अन्धकार में डूब गए । 'सूर्य अस्त हो गया' परम्परया यह समाचार पाकर–चौहद्दियों पर विद्यमान धुँधले (अर्थात् हल्के) अन्धकार के समान तमाल वनपंक्तियों वाले, वसिष्ठ प्रभृति सप्तर्षि-समूह द्वारा अध्यासित, (वसिष्ठपत्नी) देवी अरुन्धती के सञ्चरण से पवित्रित, संस्थापति किये गए पलाशदण्डों युक्त चतुर्दिक् दिखाई पड़ने वाले (भक्ष्य) कन्दमूलों से युक्त तथा एक होने में विद्यमान आकर्षक (आंख की) पुतलियों वाले मृग से अलंकृत स्वर्गलोकरूपी आश्रमस्थान में रहने वाले-वैराग्यभावना से संवलित, धुले हुए दुकूल सदृश वल्कल वस्त्रों रूपी निर्मल परिधान वाले तथा (सतार, तार=प्रणव या ओंकार) ओङ्कार युक्त (अन्त:पुर, पुर=शरीर, अन्तर्=हृदय) शरीरस्थ हृदयवाले (किसी तपस्वी की भाँति)

वैराग्य अर्थात् अरुणिमा से युक्त, धुले हुए दुकूल वल्कल रूपी निर्मल गगन-मण्डलवाला तथा नक्षत्र मण्डल से युक्त अन्तःपुर वाला अथवा (बृहस्पति की पत्नी एवं चन्द्रमा की प्रेयसी) तारा से अलङ्कृत अन्तःपुर वाला अमृत-किरण चन्द्रमा चौहद्दियों (क्षितिजों पर) विद्यमान तमाल वनपंक्तियों के समान स्वल्पमात्र अन्धकार वाले, सप्तर्षिमण्डल (नक्षत्र विशेष) से अलंकृत, अरुन्धती (नामक नक्षत्र विशेष) के सञ्चरण से पवित्र, नियराए हुए 'उत्तराषाढ' नामक नक्षत्र से युक्त, दृष्टिगोचर होते हुए मूलनक्षत्र वाले तथा एक कोने में विद्यमान मनोहर तारकों से युक्त मृगशिरा नक्षत्र वाले आकाश-मण्डल में सुशोभित हो गया।

**संस्कृत-व्याख्या**—**संध्यायाम्**=संधिवेलायाम्, **क्षयम्**=विनाशम्, **उपगतायाम्**=प्राप्तायाम्, **तद्विनाशदुःखिता**=तस्याः संध्यायाः विनाशेन दुःखिता शोकाकुला, **विभावरी**=रजनी, **कृष्णाजिनम् इव**=कृष्णसारमृगचर्मवत्, **अभिनवम्**=नवीनम्, **तिमिरोद्गमम्**=तिमिरस्य तमसः उद्गमः प्राकट्यं तम्, **अवहत्**=धारणमकरोत्, **तिमिरम्**=तमः, **मुनिहृदयानि**=मुनीनाम् ऋषीणां हृदयानि चेतांसि, **विहाय**=परित्यज्य, **अन्यत्**=इतरत्, **सर्वम्**=अखिलम्, **अन्धकारताम्**=तमोमयताम्, **अनयत्**=प्रापयत्। **क्रमेण च**=क्रमशः च, **रविः**=सूर्यः स्वसखा इति भावः, **अस्तम्**=लोपं विनाशं वा, **गतः**=प्राप्तः, **इति**=इत्थम्, **उदन्तम्**=वृत्तान्तम्, **उपलभ्य**=लब्ध्वा, **अमृतदीधितिः**=अमृतं सुधा दीधितिषु रश्मिषु यस्य तादृशः, सुधांशुः, **जातवैराग्यः**=जातं समुत्पन्नं वैराग्यं विरक्तिः यस्य स तादृशः, **धौतदुकूलवल्कलधवलाम्बरः**=धौतं प्रक्षालितं यत् दुकूलं क्षौमवस्त्रं तद्वत् वल्कलं वृक्षत्वक् धवलं स्वच्छम् अम्बरं आकाशम् एव यस्य सः तादृशः वस्तुस्थितौ धौतदुकूलवल्कलवत् धवलम् अम्बरं येन सः, **सतारान्तःपुरम्**=सतारं तारयति तारः ब्रह्म तेन सह विद्यमानं सतारं सप्रणवम् अन्तःपुरं पुरस्य शरीरस्य अन्तः मध्यं कुण्डलिनी नाडी यस्य स तादृशः, **पर्यन्तस्थिततनुतिमिरतमालवनलेखम्**=पर्यन्ते प्रान्तभागे स्थितं विद्यमानं यत् तनु स्वल्पं तिमिरं अन्धकारः तदिव तमालानां तापच्छानां वनलेखा काननश्रेणी यत्र तं तादृशम्,

गगनतलपक्षे पर्यन्ते स्थितं तनुतिमिरं तमालवनलेखा इव यस्य तत्, **सप्तर्षि-मण्डलाध्युषितम्**=सप्त च ते ऋषयः सप्तर्षयः वसिष्ठादिसप्ततपस्विनः तेषां मण्डलेन समूहेन अध्युषितम् आश्रितम्, गगनतलपक्षे सप्तर्षीणां चित्रशिखण्डिनां सप्ततारकाणां मण्डलेन समूहेन अध्युषितं संयुक्तम्, **अरुन्धतिसंचरणपूतम्**= अरुन्धत्याः वसिष्ठपत्न्याः संचरणेन पूतं मेध्यम्, गगनतलपक्षे अरुन्धत्याः नक्षत्र-विशेषस्य संचरणेन भ्रमणेन पूतम्, **उपहिताषाढम्**=उपहिताः संनिहिताः आषाढाः पलाशदण्डाः यत्र तं तादृशम् गगनपक्षे उपहिते संनिहिते आषाढे पूर्वा-षाढोत्तराषाढानक्षत्रे यत्र तत् तादृशम्, **आलक्ष्यमाणमूलम्**=आ समन्तात् लक्ष्य-माणानि विलोक्यकानानि मूलानि कन्दानि यत्र तं तादृशम्, गगनपक्षे आलक्ष्य-माणं दृश्यमानं मूलं मूलनक्षत्रं यत्र तत्, **एकान्तस्थितचारुतारकमृगम्**=एकान्ते एकप्रदेशे स्थिताः विद्यमानाः चारुतारकाः मनोहरकनीनिकाः मृगाः हरिणाः यत्र तं तादृशम्, एकान्ते स्थितः चारुतारकामनोहरनक्षत्रं मृगः मृगशिराः यत्र तत्, **अमरलोकाश्रमम् इव**=अमरलोकस्य स्वर्गस्य यः आश्रमः तपोवनभूमिः तम् इव: **गगनतलम्**=आकाशतलम्, **अध्यतिष्ठत्**=अधितस्थौ ।

**टिप्पणी–उदन्त**–वृत्तान्त, समाचार । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । **अपहाय**–अप+हा+क्त्वा—ल्यप् । **अन्धकारताम्**–अन्ध-कार+तल् । **सताराऽन्तःपुरः**–वैराग्यधारी चन्द्रमा के शरीर के मध्य कुण्डलिनी नाड़ी में तारक (प्रणव) का निवास स्थान था । अथवा चन्द्रमा का हृदय तारा शक्ति से युक्त था । यह तारा महाशक्ति या महाविद्या के १० रूपों में से एक है । ये दश शक्तियाँ इस प्रकार हैं—काली, तारा, षोडशी, छिन्नमस्ता, धूमावती, बगला, मातङ्गी तथा कमला । चन्द्रमा के पक्ष में—ताराओं सहित अन्तःपुर वाला । **सप्तर्षिमण्डल**–सात ऋषियों का समूह, आकाश में उत्तर की ओर दिखाई देने वाला सात नक्षत्रों का समूह । **आलक्ष्यमाण**—आ+लक्ष्+यक्+शानच् । यहाँ **श्लेषानुप्राणित उपमा है ।**

चन्द्राभरणभूतस्तारकाकपालशकलालंकृतादम्बरतलात् त्र्यम्बको-

त्तमाङ्गादिव गङ्गा सागरानापूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना । हिमकरसरसि विकचपुण्डरीकसितचन्द्रिकाजलपानलोभादवतीर्णो निश्चलमूर्तिरमृतपङ्कलग्न इवादृश्यत हरिणः । तिमिरजलधरसमयापगमानन्तरमभिनवसितसिन्दुवारकुसुमपाण्डुरैरर्णवागतैरगाह्यन्त हंसैरिव कुमुदसरांसि चन्द्रपादैः । विगलितसकलोदयरागं रजनिकरबिम्बमम्बरावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत ।

**हिन्दी अनुवाद**–चन्द्रमा रूपी अलंकरण को धारण करने वाले तथा तारकों के समान (शुभ्र) नरकपाल खण्डों से अलंकृत भगवान् त्र्यम्बक (शङ्कर) के ललाटस्थल से भूतल पर गिरने वाली तथा समुद्र को पूर्ण करती हुई, (तटवर्ती) हंसों के कारण धवलीभूत गङ्गा की भाँति–(उदीयमान) चन्द्रमा रूपी आभरण से युक्त तथा 'कपालशकल' (खपड़े के टुकड़े) प्रतीत होने वाले तारकों से खचित आकाशमण्डल से–समुद्र को समन्ततः भरने वाली तथा हंसों के समान धवल-चाँदनी पृथ्वीतल पर बिखर गई । खिले हुए श्वेत कमलों के समान श्वेत चन्द्रमा रूपी सरोवर में चन्द्रिका रूपी जल पीने के लोभवश उतरा हुआ (चन्द्रमा का लाञ्छनभूत) हरिण मानो अमृतपङ्क में फँसा हुआ अतएव स्पन्दनविहीन आकृति वाला दिखाई पड़ने लगा । अन्धकार सदृश पावस ऋतु की समाप्ति के बाद नूतन श्वेत सिन्धुवार पुष्प के समान धवलर्ण वाले, अर्णव अर्थात् जलाशयों में उतरे हुए, तथा कुमुद संकुल सरोवरों में अवगाहन करने वाले राजहंसों की भाँति–वर्षाऋतु सरीखी अन्धकारराशि के विलीन हो जाने के बाद, अभिनव श्वेत सिन्धुवार पुष्प के समान शुभ्रवर्ण वाली तथा 'अर्णव' अर्थात् समुद्र पर छहराई हुई चन्द्रकिरणें कुमुद–सरोवरों को व्याप्त करने लगीं । गली हुई–उदयकालीन सारी अरुणाई वाला चन्द्रबिम्ब, उस समय आकाश गंगा में

अवगाहन के कारण धुले हुए सिन्दूर वाले [इन्द्रवाहन] ऐरावत गजराज के कुम्भस्थल की भाँति दीखने लगा।

**संस्कृत-व्याख्या**–**चन्द्राभरणभृतः**=चन्द्रः सुधांशुः एव आभरणम् आभूषणं तद् बिभर्ति धारयति इति तस्मात्, **तारकाकपालशकलालंकृतात्**=तारकाः नक्षत्राणि कपालशकलानि इव मनुष्यमस्तकास्थिखण्डानि इव तैः अलंकृतात् विभूषितात् उत्तमाङ्गपक्षे तारकाः इव कपालशकलानि तैः अलंकृतात्, **अम्बरतलात्**=आकाशतलात्, **त्र्यम्बकोत्तमाङ्गात्**=त्रीणि त्रिसंख्यामितानि अम्बकानि नेत्राणि यस्य सः शिवः तस्य उत्तमाङ्गात् शिरसः, **सागरान्**=समुद्रान्, **आपूरयन्ती**=आप्लावयन्ती गङ्गापक्षे आप्लावयिष्यन्ती, अवतीर्य समुद्रपूरणादिविभावः, **हंसधवला**=हंसवत् श्वेतगरुद्वत् धवला शुभ्रा गङ्गापक्षे हंसैः श्वेतगरुद्भिः धवला श्वेतगरुद्भिः धवला श्वेता, **ज्योत्स्ना**=कौमुदी, **गङ्गा इव**=भागीरथी इव, **धरण्याम्**=धरायाम्, **अपतत्**=पपात, उपागच्छत्। **विकचपुण्डरीकसिते**=विकचानि यानि पुण्डरीकाणि श्वेतकमलानि तद्वत् सिते श्वेतवर्णे सरः जलाशयः तस्मिन्, **चन्द्रिकाजलपानलोभात्**=चन्द्रिका ज्योत्स्ना एव जलं सलिलं तस्य पानाय लोभः लोलुपता तस्मात्, **अवतीर्णः**=प्रविष्टः, **हरिणः**=मृगः, **अमृतपङ्कलग्न इव**=अमृतस्य सुधायाः पङ्के कर्दमे लग्नः इव, **निश्चलमूर्तिः**=निश्चला सुस्थिरा मूर्तिः तनुः यस्य स तादृशः, **अदृश्यत**=अवालोक्यत। **तिमिरजलधरसमयापगमानन्तरम्**=तिमिरम् तमः जलधरसमयः जलदकालः इव तस्य अपगमः दूरीभावः तस्माद् अनन्तरम् अव्यवहितोत्तरम्, हंसपक्षे तिमिरम् इव जलधरसमयः तस्य अपगमानन्तरम्, **अभिनवसितसिन्धुवारकुसुमपाण्डुरैः**=अभिनवानि नूतनानि सितानि श्वेतानि यानि सिन्दुवारकुसुमानि निर्गुण्डीपुष्पाणि तद्वत् पाण्डुरैः शुभ्रैः, **अर्णवागतैः**=अर्णवात् अन्तरिक्षात् हंसपक्षे समुद्रात् आगतैः आयातैः, **चन्द्रपादैः**=चन्द्रस्य सुधांशोः पादैः मयूखैः, **हंसैः इव**=श्वेतगरुद्भिः इव, **कुमुदसरांसि**=कुमुदानां कैरवाणां सरांसि जलाशयाः, **अगाह्यन्त**=आलोड्यन्त। **विगलितसकलोदयरागम्**=विगलितः विलयं प्राप्तः सकलः समस्तः उदयरागः उदयकालिकलौहित्यं यस्य तत्, **रजनिकरबिम्बम्**=रजनिकरः चन्द्रः

तस्य बिम्बं मण्डलम्, **तत्क्षणम्**=तत्काले, **अम्बरापगावगाहधौतसिन्दूरम्**=अम्बरस्य गगनस्य आपगा सरित् आकाशगङ्गा यस्याम् अवगाहेन स्नानेन धौतं प्रक्षालितं सिन्दूरं नागजं यस्य तत् तादृशम्, **ऐरावतकुम्भस्थलम् इव**=ऐरावतस्य इन्द्रगजस्य कुम्भस्थलम् इव मूर्धास्थलम् इव, **अलक्ष्यत**=अदृश्यत ।

**टिप्पणी**-**तारकाकपालशकलालंकृतः**—कपाल के खण्डों जैसे नक्षत्रों से सुशोभित आकाश । **उत्तमाङ्ग**-सिर । हरिण—चन्द्रमा के मध्य में चमकने वाला काला धब्बा, जिसके कारण चन्द्रमा हरिणाङ्क कहा जाता है । हरिण का पर्याय मृग भी मृगाङ्क आदि नामों में प्रचलित है । वस्तुतः (हरति सर्वान् वर्णान् इति हरिणः=श्यामः हरितो वा वर्णः) हरे रंग या श्यामरंग के लिए इस शब्द का प्रयोग करके (हरिणः अङ्के यस्य) जिसके बीच में धब्बा हो उसे हरिणांक कहते हैं । **अम्बरापगा**-आकाश-गङ्गा (आपगा-नदी) । **'गङ्गा इव'** में **पूर्णोपमा**, **'अमृतपङ्कलग्न इव'** में **क्रियोत्प्रेक्षा** तथा **'हंसैरिव'** में **उपमा** है । **'कुम्भस्थलमिव'** में उपमा अलङ्कार है ।

**शनैः शनैश्च दूरोदिते भगवति हिमस्रुति सुधाधूलिपटलेनेव धवलीकृते चन्द्रातपेन जगति, अवश्यायजलबिन्दुमन्दगतिषु विघटमानकुमुदवनकषायपरिमलेषु समुपोढनिद्राभरालसतारकैरन्योन्यग्रथितपक्षपुटैरारब्धरोमन्थमन्थरमुखैः सुखासीनैराश्रममृगैरभिनन्दितागमनेषु प्रवहत्सु निशामुखसमीरणेषु अर्धयाममात्रावखण्डितायां विभावर्यां हारीतः कृताहारं मामादाय सर्वैस्तैर्महामुनिभिरुपसृत्य चन्द्रातपोद्भासिनी तपोवनैकदेशे वेत्रासनोपविष्टमनतिदूरवर्तिना जालपादनाम्ना शिष्येण दर्भपवित्रपवित्रपाणिना मन्दमन्दमुपवीज्यमानं पितरमवोचत्—तात ! सकलेयमाश्चर्यश्रवणकुतूहलाकलितहृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते । व्यपनीतश्रमश्च कृतोऽयं पतत्रिपोतः । तदावेद्यतां यदनेन कृतम्, अपरस्मिन् जन्मनि**

कोऽयमभूद् भविष्यति च' इति। एवमुक्तः स महामुनिरग्रतः स्थितं मामवलोक्य तांश्च सवनिकाग्रान् श्रवणपरान् मुनीन् बुद्ध्वा शनैः शनैरब्रवीत्—श्रूयतां यदि कुतूहलम् ।'

**हिन्दी-अनुवाद**—धीरे-धीरे भगवान् हिमांशु (चन्द्रमा) के ऊँचे चढ़ जाने पर, चूने की धूलिराशि प्रतीत होने वाली चाँदनी द्वारा संसार के धवल बना दिया जाने पर, तुषार-जलबिन्दुओं के कारण मन्थर गति वाले—विकसित होते हुए कुमुदवनों की कसैली महक वाले, भरपूर बढ़ी हुई निद्रा के भारवश अलसाई हुई पुतलियों से युक्त, परस्पर उलझी हुई बरौनियों से युक्त, प्रारम्भ की गई जुगाली के कारण अलसाए मुहों से युक्त तथा सुखपूर्वक बैठे हुए आश्रम-मृगों द्वारा अभिनन्दन किये गये आगमनवाले प्रदोषकालीन समीरणों (हवाओं) के प्रवाहित होने पर, आधा पहर रात बीत जाने पर (मुनिकुमार) हारीत भोजन से निबटे हुए मुझ को लेकर, उन समस्त मुनियों के साथ पास पहुँच कर, चन्द्रिकार्चित तपोवन के एक खण्ड में वेत्रासन पर आनन्द बैठे हुए समीप ही विद्यमान कुशों के समान पवित्र मृगचर्म-निर्मित तालवृन्त (पंखा) से अलंकृत हाथवले 'जालपाद' नामक शिष्य द्वारा धीरे-धीरे हवा किये जाते हुए (अपने) पितृचरण (महर्षि जाबालि) से बोला—पिता जी ! (शुकविषयक) आश्चर्यजनक (वृत्तान्त) सुनने के लिए उत्कण्ठा से परिपूर्ण हृदयवाली यह सम्पूर्ण तापस-सभा समुपस्थित हो गई है तथा मण्डल बांधकर (आपकी) प्रतीक्षा कर रही है । इस शुकशावक की थकावट भी (भोजनादि) से अच्छी तरह मिटा दी गई है । इसलिए (अब आप कृपा करके) बतायें कि इसने पूर्वजन्म में क्या किया था ? अथवा (पहले) यह कौन था ? अथवा (भविष्य) में यह कौन होगा ?

इस प्रकार पूछे जाने पर वे महामुनि (जाबालि) सम्मुख विद्यमान मुझे देखकर और उन समस्त मुनियों को (भी) एकाग्रचित्त तथा श्रवणाभिमुख समझ कर धीरे-धीरे कह उठे—(अच्छा तो) सुनिये यदि (सुनने के लिए)

उत्कण्ठा है तो ।

**संस्कृत-व्याख्या**-**शनैः-शनैः**=मन्दं मन्दम्, **भगवति**=ऐश्वर्यशालिनि, **हिममूर्ति**=चन्द्रमसि, **दूरोदिते**=दूरम् उच्चम् उदिते आरूढे सति, **सुधाधूलिपटलेन इव**=सुधायाः भवनविलेपनद्रव्यस्य धूलयः पांसवः तासां पटलेन समूहेन इव, **चन्द्रातपेन**=चन्द्रस्य हिमांशोः आतपेन प्रभया, **जगति**=संसारे, **धवलीकृते**=शुभ्रीकृते, **अवश्यायजलबिन्दुमन्दगतिषु**=अवश्यायः तुषारः तस्य ये जलबिन्दवः सलिलकणानि तैः मन्दा धीरा गतिः सचारः येषां तेषु, **विघटमानकुमुदवनकषायपरिमलेषु**=विघटमानानां विकसतां कुमुदवनानां कैरवकाननानां कषायः कषायगुणविशिष्टः परिमलः गन्धः येषु तेषु, **समुपोढनिद्राभरालसतारकैः**=समुपोढः सम्यक् धारितः यः निद्रायाः भरः तन्द्राभारः तेन अलसे मन्थरे तारके कनीनिके येषां तैः, **अन्योन्यग्रथितपक्ष्मपुटैः**=अन्योन्यं परस्परं ग्रथिते गुम्फिते पक्ष्मपुटे लोमसंपुटे यैः तैः, **आरब्धरोमन्थमन्थरमुखैः**=आरब्धः उपक्रान्तः यः रोमन्थः चर्वितचर्वणम् तेन मन्थरं सालसं मुखं लपनं येषां तैः, **सुखासीनैः**=सुखं सानन्दम् आसीनैः उपविष्टैः, **आश्रममृगैः**=तपोभूमिहरिणैः, **अभिनन्दितागमनेषु**=अभिनन्दितं श्लाघितम् आगमनम् उपस्थानं येषां तेषु, **निशामुखसमीरणेषु**=निशायाः क्षपायाः मुखं निशामुखं प्रदोषः तस्य समीरणेषु पवनेषु, **प्रह्वत्सु**=संचरत्सु, **विभावर्याम्**=रजन्याम्, **अर्धयाममात्रावखण्डितायाम्**=अर्धयामस्य अर्धयामः केवलः अर्धयामः अर्धयाममात्रः तेन अर्धप्रहरमात्रेण अवखण्डितायां न्यूनत्वं प्राप्तायां सत्याम्, **हारीतः**=जाबालिपुत्रः, **कृताहारम्**=कृतः आहारः, फलादिभक्षणं येन तादृशम्, **माम्**=वैशम्पायनम्, **आदाय**=गृहीत्वा, **तैः**=पूर्वोक्तैः, **सर्वैः**=समस्तैः, **महामुनिभिः**=महर्षिभिः, **उपसृत्य**=उपगम्य, **चन्द्रातपोद्भासिनी**=चन्द्रस्य हिमांशोः आतपेन प्रभया उद्भासते दीप्यते इति तच्छीलः तस्मिन्, **तपोवनैकदेशे**=तपोवनस्य धर्मारण्यस्य एकदेशे एकभागे आश्रमे इत्यर्थः, **वेत्रासनोपविष्टम्**=वेत्रस्य वेतसस्य आसने विष्टरे उपविष्टम् अवस्थितम्, **अनतिदूरवर्तिना**=समीपस्थेन, **जालपादनाम्ना**=जालपादः नाम यस्य तेन जालपादाभिधानेन, **शिष्येण**=अन्तेवासिना, **दर्भपवित्रपवित्रपाणिना**=दर्भ कुशः

तद्वत् पवित्रं पावनं ववित्रं मृगचर्मव्यजनं पाणौ हस्ते यस्य तेन तादृशेन सता, **मन्दमन्दम्**=शनैः शनैः, **उपवीज्यमानम्**=व्यजनविषयीक्रियमाणम्, **पितरम्**=तातं जाबालिम्, **अवोचत्**=अवादीत्, **तात**=पितः, **इयम्**=पुरो दृश्यमाना, **आश्चर्यश्रवणकुतूहलाकलितहृदया**=आश्चर्यस्य विस्मयस्य श्रवणाय आकर्णनाय यत् कुतूहलम् कौतुकं तेन आकलितं व्याप्तं हृदयं चित्तं यस्याः सा तादृशी, **समुपस्थिता**=समागता, **आबद्धमण्डला**=आबद्धं रचितं मण्डलं परिधिः यया सा, **सकला**=समस्ता, **तापसपरिषद्**=तपस्विसभा, **प्रतीक्षते**=प्रतिपालयते, **च**=तथा, **अयम्**=पुरो दृश्यमानः, **पतत्रिपोतः**=शुकशिशुः, **व्यपनीतश्रमः**=व्यपनीतः दूरीकृतः श्रमः क्लान्तिः यस्य स तादृशः, **कृतः**=विहितः, **तत्**=तस्मात् कारणात्, **आवेद्यताम्**=बोध्यताम्, **अनेन**=शूकशावकेन, **यत्**=यत्किमपि, **कृतम्**=विहितम्, **अपरस्मिन्**=अस्मद् जन्मनः अन्यस्मिन्, **पूर्वस्मिन्**, **जन्मनि**=भवे, **अयम्**=शुकशिशुः, **कः** **अभूत्**=किं नामासीत् । भाविनि **जन्मनि** च कः **भविष्यति**=कस्यां जातौ उत्पत्स्यते । इति, **तु**=पुनः, **एवम्**=इत्थम्, **उक्तः**=पृष्टः सन्, **सः**=पूर्वोक्तः, **महामुनिः**=तपस्वी जाबालिः, **अग्रतः**=पुरतः, **स्थितम्**=विद्यमानम्, **माम्**=वैशम्पायनम्, **अवलोक्य**=दृष्ट्वा, **च** तथा, **तान्**=पूर्वोक्तान्, **सर्वान्**=समस्तान्, **मुनीन्**=तपस्विनः, **एकाग्रान्**=एकतानान्, **श्रवणपरान्**=श्रवणोत्सुकान्, **बुद्ध्वा**=अवगम्य, **शनैः-शनैः**=मन्दं मन्दम्, **अब्रवीत्**=अगादीत्, **यदि**=चेत्, **कुतूहलम्**=आश्चर्यम्, **तर्हि** **श्रूयताम्**=निशम्यताम् ।

**टिप्पणी**–**उदित**–उत्+इ+क्त । **हिमव्रत**–चन्द्रमा । **सुधाधूलि**–भवनों को पोतने के काम में आने वाली कलई । **अवश्याय**–ओस, 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इत्यमरः । **समुपोढ**–सम्+उप+वह्+क्त । **रोमन्थ**–जुगाली, खाये हुए चारे को पुनः निकालकर थोड़ा-थोड़ा करके चबाते रहना । **निशामुख**–प्रदोषकाल । 'प्रदोषो रजनीमुखम्,' अमरकोश । **धवित्र**–मृगचर्म से बना हुआ पंखा 'धवित्रं व्यजनं तद् यद् रचितं मृगचर्मणा' अमरकोश । **पतत्रिपोत**–पक्षी का बच्चा । **उपसृत्य**–उप+सृ+क्त्वा—ल्यप् । **आदाय**–आङ्+दा+

क्त्वा–ल्यप् । **विघटमान**—वि=घट्+शानच् । **समीरण**–वायु, 'समीरमारुत-मरुज्जगत्प्राणसमीरणाः' इत्यमरः । **विभावरी**–"अथ शर्वरी ।। निशा निशीथनी रात्रिस्त्रियामा क्षणदा क्षपा । विभावरीतमस्विन्यौ रजनी यामिनी तमी ।।" इत्यमरः । **स्थितम्**–स्था+क्त । **अवलोक्य**–अव+लोक्+क्त्वा–ल्यप् । कौतूहलम्=कौतूहल, "कौतूहलं कौतुकं च कुतुकं च कुतूहलम्" इत्यमरः ।

**पदव्याकरणोपेता गभीरार्थप्रकाशिका ।**
**आचन्द्रतारकं चन्द्रेदस्माकं कापि चन्द्रिका ।।**

## ।। कादम्बरी-कथामुख समाप्त ।।